# तत्त्ववैशारद्यां समाधिपादः

https://sa.wikisource.org/s/9tw

**तत्त्ववैशारदी**

समाधिपादः प्रथमः।

(अथ पातञ्जलसूत्राणि।)

अथ योगानुशासनम्॥1.1॥

नमामि जगदुत्पत्तिहेतवे वृषकेतवे। क्लेशकर्मविपाकादिरहिताय हिताय च॥1॥
नत्वा पतञ्जलिम् ऋषिं वेदव्यासेन भाषिते। संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधास्यते॥2॥

इह हि भगवान् पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य संक्षेपतस् तात्पर्यार्थं प्रेक्षावत्प्रवृत्त्यङ्गं श्रोतुश् च सुखावबोधार्थम् आचिख्यासुर् आदाव् इदं सूत्रं रचयां चकार --- अथ योगानुशासनम्। तत्र प्रथमावयवम् अथशब्दं व्याचष्टे --- अथेत्य् अयम् अधिकारार्थः। अथैष ज्योतिर् इतिवत्, न त्व् आनन्तर्यार्थः। अनुशासनम् इति हि शास्त्रम् आहानुशिष्यते ऽनेनेति व्युत्पत्त्या। न चास्य शमदमाद्यनन्तरं प्रवृत्तिर् अपि तु तत्त्वज्ञानचिख्यापयिषानन्तरम्। जिज्ञासाज्ञानयोस् तु स्यात्। यथाम्नायते --- "तस्माच् छान्तो दान्त उपरतस् तितिक्षुः समाहितो भूत्वात्मन्य् एवात्मानं पश्येत्" [बृहदारण्यकोपनिषत् 4.4.23] इति। शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानन्तर्यस्य च संभवेऽपि नाभिधानं, शिष्यप्रतीतिप्रवृत्त्योर् अनुपयोगात् प्रामाणिकत्वे योगानुशासनस्य तदभावे ऽप्य् उपेयत्वाद् अप्रामाणिकत्वे च तद्भावेऽपि हेयत्वात्। एतेन तत्त्वज्ञानचिख्यापयिषयोर् आनन्तर्याभिधानं परास्तम्। अधिकारार्थत्वे तु शास्त्रेणाधिक्रियमाणस्य प्रस्तूयमानस्य योगस्याभिधानात् सकलशास्त्रतात्पर्यार्थव्याख्यानेन शिष्यः सुखेनैव बोधितश् च प्रवर्तितश् च भवतीति। निःश्रेयसस्य हेतुः समाधिर् इति हि श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धम्। ननु किं सर्वसंदर्भगतोऽथशब्दोऽधिकारार्थः, तथा सति "अथातो ब्रह्मजिज्ञासा" [ब्रह्मसूत्रम् 1.1.1] इत्यादाव् अपि प्रसङ्ग इत्य् अत आह --- अयम् इति। ननु ---

"हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः"

इति योगियाज्ञवल्क्यस्मृतेः कथं पतञ्जलेर् योगशास्त्रकर्तृत्वम् इत्य् आशङ्क्य सूत्रकारेणानुशासनम् इत्य् उक्तम्। शिष्टस्य शासनम् अनुशासनम् इत्य् अर्थः। यदायम् अथशब्दोऽधिकारार्थस् तदैष वाक्यार्थः संपद्यत इत्य् आह --- योगानुशासनं शास्त्रम् अधिकृतम् इति। ननु व्युत्पाद्यमानतया योगोऽत्राधिकृतो न तु शास्त्रम् इत्य् अत आह --- वेदितव्यम् इति। सत्यं व्युत्पाद्यमानतया योगः प्रस्तुतः, स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः। करणगोचरश् च व्युत्पादकस्य व्यापारो न कर्मगोचर इति कर्तृव्यापारविवक्षया योगविषयस्य शास्त्रस्याधिकृतत्वं वेदितव्यम्। शास्त्रव्यापारगोचरतया तु योग एवाधिकृत इति भावः। अधिकारार्थस्य चाथशब्दस्यान्यार्थं नीयमानोदकुम्भदर्शनम् इव श्रवणं मङ्गलायापि कल्पत इति मन्तव्यम्। शब्दसंदेहनिमित्तम् अर्थसंदेहम् अपनयति --- योगः समाधिर् इति। "युज समाधौ" [धातुपाठः 4] इत्य् अस्माद् व्युत्पन्नः समाध्यर्थो न तु "युजिर् योगे" [धातुपाठः 7] इत्य् अस्मात् संयोगार्थ इत्य् अर्थः। ननु समाधिर् अपि वक्ष्यमाणस्याङ्गिनो योगस्याङ्गम्। न चाङ्गम् एवाङ्गीत्य् अत आह --- स च सार्वभौमः। चस् त्वर्थोऽङ्गाद् अङ्गिनं भिनत्ति। भूमयोऽवस्था वक्ष्यमाणा मधुमती मधुप्रतीका विशोका संस्कारशेषास् ताश् चित्तस्य, तासु सर्वासु विदितः सार्वभौमश् चित्तवृत्तिनिरोधलक्षणो योगः। तदङ्गं तु समाधिर् नैवंभूतः। व्युत्पत्तिनिमित्तमात्राभिधानं चैतद् योगः समाधिर् इति। अङ्गाङ्गिनोर् अभेदविवक्षामात्रेण प्रवृत्तिनिमित्तं तु योगशब्दस्य चित्तवृत्तिनिरोध एवेति परमार्थः। वृत्तयो ज्ञानान्य् आत्माश्रयाण्य् अतस् तन्निरोधो ऽप्य् आत्माश्रय एवेति ये पश्यन्ति तन्निरासायाह --- चित्तस्य धर्म इति। चित्तशब्देनान्तःकरणं बुद्धिम् उपलक्षयति। न हि कूटस्थनित्या चितिशक्तिर् अपरिणामिनी ज्ञानधर्मा भवितुम् अर्हति बुद्धिस् तु भवेद् इति भावः। स्याद् एतत् सार्वभौमश् चेद् योगो हन्त भोः क्षितमूढविक्षिप्ता अपि चित्तभूमयः। अस्ति च परस्परापेक्षया वृत्तिनिरोधोऽप्य् आस्व् इति तत्रापि योगत्वप्रसङ्ग इत्य् आशङ्क्य हेयोपादेयभूमीर् उपन्यस्यति --- क्षिप्तम् इत्यादि। क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणम् अत्यन्तम् अस्थिरम्। मूढं तु तमःसमुद्रेकान् निद्रावृत्तिमत्। क्षिप्ताद् विशिष्टं विक्षिप्तम्। विशेषोऽस्थेमबहुलस्य कादाचित्कः स्थेमा। सा चास्यास्थेमबहुलता सांसिद्धिकी वा वक्ष्यमाणव्याधिस्त्यानाद्यन्तरायजनिता वा। एकाग्रम् एकतानम्। निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम्। तत्र क्षिप्तमूढयोः सत्य् अपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्येणापि निःश्रेयसहेतुभावाभावात् तदुपघातकत्वाच् च योगपक्षाद् दूरोत्सारितत्वम् इति न तयोर् योग्त्वं निषिद्धम्। विक्षिप्तस्य तु कादाचित्कसद्भूतविषयस्थेमशालिनः संभाव्येत योगत्वम् इति निषेधति। तत्र विक्षिप्ते चेतसि समाधिः कादाचित्कसद्भूतविषयस्य चित्तस्य स्थेमा न योगपक्षे वर्तते। कस्मात्। यतस् तद्विपक्षविक्षेपोपसर्जनीभूतः। विपक्षवर्गान्तर्गतस्य हि स्वरूपम्

एव दुर्लभं प्राग् एव कार्यकरणं न खलु दहनान्तर्गतं बीजं त्रिचतुराक्षणावस्थितम् उप्तम् अप्य् अङ्कुराय कल्पत इति भावः। यदि विक्षेपोपसर्जनीभूतः समाधिर् न योगः कस् तर्हीत्य् अत आह --- यस् त्व् एकाग्रे चेतसीति। भूतम् इति समारोपितम् अर्थं निवर्तयति। निद्रावृत्तिर् अपि स्वालम्बने तमसि भूते भवत्य् एकाग्रेत्य् अत उक्तम् --- सद् इति। शोभनं नितान्ताविर्भूतं सत्त्वं तमःसमुद्रेकस् त्व् अशोभनस् तस्य क्लेशहेतुत्वाद् इति। द्योतनं हि तत्त्वज्ञानम् आगमाद् वानुमानाद् वा भवद् अपि परोक्षरूपतया न साक्षात्कारवतीम् अविद्याम् उच्छिनत्ति द्विचन्द्रदिङ्मोहादिष्व् अनुच्छेदकत्वाद् अत आह --- प्रेति। प्रकारो हि प्रकर्षं द्योतयन् साक्षात्कारं सूचयति। अविद्यामूलत्वाद् अस्मितादीनां क्लेशानां, विद्यायाश् चाविद्योच्छेदरूपत्वाद् विद्योदये चाविद्यादिक्लेशसमुच्छेदो विरोधित्वात् कारणविनाशाच् चेत्य् आह --- क्षिणोति चेति। अत एव कर्मरूपाणि बन्धनानि श्लथयति। कर्म चात्रापूर्वम् अभिमतं कार्ये कारणोपचारात्। श्लथयति स्वकार्याद् अवसादयति। वक्ष्यति हि --- "सति मूले तद्विपाकः" [योगसूत्रम् 2.13] इति। किं च निरोधम् अभुमुखं करोत्य् अभिमुखीकरोति। स च संप्रज्ञातश् चतुष्प्रकार इत्य् आह --- स चेति। असंप्रज्ञातम् आह --- सर्ववृत्तीति। रजस्तमोमयी किल प्रमाणादिवृत्तिः सात्त्विकीं वृत्तिम् उपादाय संप्रज्ञाते निरुद्धा। असंप्रज्ञाते तु सर्वासाम् एव निरोध इत्य् अर्थः। तद् इह भूमिद्वये समाप्ता या मधुमत्यादयो भूमयस् ताः सर्वास् तासु विदितः सार्वभौम इति सिद्धम्॥1.1॥

योगश् चित्तवृत्तिनिरोधः॥1.2॥

द्वितीयं सूत्रम् अवतारयति --- तस्य लक्षणेति। तस्येति पूर्वसूत्रोपात्तं द्विविधं योगं परामृशति --- योगश् चित्तवृत्तिनिरोधः। निरुध्यन्ते यस्मिन् प्रमाणादिवृत्तयो ऽवस्थाविशेषे चित्तस्य सोऽवस्थाविशेषो योगः। ननु संप्रज्ञातस्य योगस्याव्यापकत्वाद् अलक्षणम् इदम्। अनिरुद्धा हि तत्र सात्त्विकी चित्तवृत्तिर् इत्य् अत आह --- सर्वशब्दाग्रहणाद् इति। यदि सर्वचित्तवृत्तिनिरोध इत्य् उच्येत भवेद् अव्यापकं संप्रज्ञातस्य। क्लेशकर्मविपाकाशयपरिपन्थी चित्तवृत्तिनिरोधस् तु तम् अपि संगृह्णाति। तत्रापि राजसतामसचित्तवृत्तिनिरोधात् तस्य च तद्भावाद् इत्य् अर्थः। कुतः पुनर् एकस्य चित्तस्य क्षिप्तादिभूमिसंबन्धः किमर्थं चैवमवस्थस्य चित्तस्य वृत्तयो निरोद्धव्या इत्य् आशङ्क्य प्रथमं तावद् अवस्थासंबन्धे हेतुम् उपन्यस्यति --- चित्तं हीति। प्रख्याशीलत्वात् सत्त्वगुणम्। प्रवृत्तिशीलत्वाद् रजोगुणम्। स्थितिशीलत्वात् तमोगुणम्। प्रख्याग्रहणम् उपलक्षणार्थम्। तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यन्ते। प्रवृत्त्या च परितापशोकादया राजसाः। प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः। स्थितिग्रहणाद् गौरवावरणदैन्यादय उपलक्ष्यन्ते। एतद् उक्तं भवति --- एकम् अपि चित्तं त्रिगुणनिर्मिततया गुणानां च वैषम्येण परस्परविमर्दवैचित्र्याद् विचित्रपरिणामं सद् अनेकावस्थम् उपपद्यत इति। क्षिप्ताद्या एव चित्तस्य भूमीर् यथासंभवम् अवान्तरावस्थाभेदवतीर् आदर्शयति --- प्रख्यारूपं हीति। चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वम्। तद् एवं प्रख्यारूपतया सत्त्वप्राधान्यं चित्तस्य दर्शितम्। तत्र चित्ते सत्त्वात् किंचिद् ऊने रजस्तमसी यदा मिथः समे च भवतस् तदैश्वर्यं च विषयाश् च शब्दादयस् तान्य् एव प्रियाणि यस्य तत् तथोक्तम्। सत्त्वप्राधान्यात् खलु चित्तं तत्त्वे प्रणिधित्सद् अपि तत्त्वस्य तमसा पिहितत्वाद् अणिमादिकम् अइश्वर्यम् एव तत्त्वम् अभिमन्यमानं तत् प्रणिधित्सति प्रणिधत्ते च क्षणम्। अथ रजसा क्षिप्यमाणं तत्राप्य् अलब्धस्थितिं तत्प्रियमात्रं भवति। शब्दादिषु पुनर् अस्य स्वरसवाही प्रेमा निरूढ एव। तद् अनेन विक्षिप्तं चित्तम् उक्तम्। क्षिप्तं चित्तं दर्शयन् मूढम् अपि सूचयति --- तद् एव तमसेति। यदा हि तमो रजो विजित्य प्रसृतं तदा चित्तसत्त्वावरकतमःसमुत्सारणे ऽशक्तत्वाद् रजसस् तमःस्थगितं चित्तम् अधर्माद्य् उपगच्छति। अज्ञानं च विपर्ययज्ञानम्। अभावप्रत्ययालम्बनं च निद्राज्ञानम् उक्तम्। ततश् च मूढावस्थापि सूचितेति। अनैश्वर्यं सर्वत्रेच्छाप्रतीघातः। अधर्मादिव्याप्तं चित्तं भवतीत्य् अर्थः। यदा तु तद् एव चित्तसत्त्वम् आविर्भूतसत्त्वम् अपगततमःपटलं सरजस्कं भवति तदा धर्मज्ञानवैराग्यैश्वर्याण्य् उपगच्छतीत्य् आह --- प्रक्षीणेत्यादि। मोहस् तमस् तद् एव चावरणं प्रकर्षेण क्षीणं यस्य तत् तथोक्तम्। अत एव सर्वतो विशेषाविशेषलिङ्गमात्रालिङ्गपुरुषेषु प्रद्योतमानम्। तथापि न धर्मायैश्वर्याय च कल्पते प्रवृत्त्यभावाद् इत्य् अत आह --- अनुविद्धं रजोमात्रया। रजसः प्रवर्तकत्वाद् अस्ति धर्मादिप्रवृत्तिर् इत्य् अर्थः। तद् अनेन संप्रज्ञातसमाधिसंपन्नयोर् मधुभूमिकप्रज्ञाज्योतिषोर् मध्यमयोर् योगिनोश् चित्तसत्त्वं संगृहीतम्। संप्रत्य् अतिक्रान्तभावनीयस्य ध्यायिनश् चतुर्थस्य चित्तावस्थाम् आह --- तद् एव चित्तं रजोलेशान् मलाद् अपेतम् अत एव स्वरूपप्रतिष्ठम्। अभ्यासवैराग्यपुटपाकप्रबन्धविधूतरजस्तमोमलस्य हि बुद्धिसत्त्वतपनीयस्य स्वरूपप्रतिष्ठस्य विषयेन्द्रियप्रत्याहृतस्यानवसिताधिकारतया च कार्यकारिणो विवेकख्यातिः परं कार्यम् अवशिष्यत इत्य् आह --- सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघध्यानोपगं भवति। धर्ममेघश् च वक्ष्यते। अत्रैव योगिजनप्रसिद्धिम् आह --- तद् इति। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघपर्यन्तं परं प्रसंख्यानम् इत्य् आचक्षते ध्यायिनः। चित्तसामानाधिकरण्यं च धर्मधर्मिणोर् अभेदविवक्षया द्रष्टव्यम्। विवेकख्यातेर् हानहेतुं चितिशक्तेश् चोपादानहेतुं निरोधसमाधिम् अवतारयितुं चितिशक्तेः साधुताम् असाधुतां च विवेकख्यातेर् दर्शयति --- चितिशक्तिर् इत्यादि। सुखदुःखमोहात्मकत्वम् अशुद्धिः। सुखमोहाव् अपि हि विवेकिनं दुःखाकुरुतः। अतो दुःखवद् धेयौ। तथा चातिसुन्दरम् अप्य् अन्तवद् दुनोति। तेन तद् अपि हेयम् एव विवेकिनः। सेयम् अशुद्धिर् अन्तश् च चितिशक्तौ पुरुषे न स्त इत्य् उक्तम् --- शुद्धा चानन्ता चेति। ननु सुखदुःखमोहात्मकशब्दादीन् इयं चेतयमाना तदाकारापन्ना कथं विशुद्धा तदाकारपरिग्रहपरिवर्जने च कुर्वती कथम् अनन्तेत्य् अत उक्तम् --- दर्शितविषयेति। दर्शितो विषयः शब्दादिर् यस्यै सा तथोक्ता। भवेद् एतद् एवं यदि बुद्धिवच् चितिशक्तिर् विषयाकारताम् आपद्येत, किं तु बुद्धिर् एव विषयाकारेण परिणता सत्य् अतदाकारायै चितिशक्त्यै विषयम् आदर्शयति। ततः पुरुषश् चेतयत इत्य् उच्यते। ननु विषयाकारां बुद्धिम् अनारूढायाश् चितिशक्तेः कथं विषयव्एदनं विषयारोहे वा कथं न तदाकारापत्तिर् इत्य् अत उक्तम् --- अप्रतिसंक्रमेति। प्रतिसंक्रमः संचारः। स चितेर् नास्तीत्य् अर्थः। स एव कुतोऽस्या नास्तीत्य् अत उक्तम् --- अपरिणामिनीति। न चितेस् त्रिविधो ऽपि धर्मलक्षणावस्थालक्षणः परिणामोऽस्ति। येन क्रियारूपेण परिणता सती बुद्धिसंयोगेन परिणमेत चितिशक्तिः। असंक्रान्ताया अपि विषयसंवेदनम् उपपादयिष्यते। तत् सिद्धं चितिशक्तिः शोभनेति। विवेकख्यातिस् तु बुद्धिसत्त्वात्मिकाशोभनेत्य् उक्तम् --- अतश् चितिशक्तेर् विपरीतेति। यदा च विवेकख्यातिर् अपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानाम् इति भावः। ततस् तद्धेतोर् निरोधसमाधेर् अवतारो युज्यत इत्य् आह --- अतस् तस्याम् इति। ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिम् अपि निरुणद्धीत्य् अर्थः।

अथ निरुद्धाशेषवृत्तिं चित्तं कीदृशम् इत्य् अत आह --- तदवस्थम् इत्यादि। स निरोधोऽवस्था यस्य तत् तथोक्तम्। निरोधस्य स्वरूपम् आह --- स निर्बीज इति। क्लेशसहितः कर्माशयो जात्यायुर्भोगबीजं तस्मान् निर्गत इति निर्बीजः। अस्यैव योगिजनप्रसिद्धाम् अन्वर्थसंज्ञाम् आदर्शयति --- न तत्रेति। उपसंहरति --- द्विविधः स योगश् चित्तवृत्तिनिरोध इति॥1.2॥

तदा द्रष्टुः स्वरूपेऽवस्थानम्॥1.3॥

संप्रत्य् उत्तरसूत्रम् अवतारयितुं चोदयति --- तदवस्थे चेतसीति। किम् आक्षेपे। तत्तदाकारपरिणतबुद्धिबोधात्मा खल्व् अयं पुरुषः सदानुभूयते न तु बुद्धिबोधरहितोऽतो ऽस्य पुरुषस्य बुद्धिबोधः स्वभावः सवितुर् इव प्रकाशः। न च संस्कारशेषे चेतसि सोऽस्ति। न च स्वभावम् अपहाय भावो वर्तितुम् अर्हतीति भावः। स्याद् एतत्। संस्कारशेषाम् अपि बुद्धिं कस्मात् पुरुषो न बुध्यत इत्य् अत आह --- विषयाभावाद् इति। न बुद्धिमात्रं पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धिः। विवेकख्यातिविषयभोगौ च पुरुषार्थौ। तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभाव इत्य् अर्थः। सूत्रेण परिहरति --- तदा द्रष्टुः स्वरूपे ऽवस्थानम्। स्वरूप इत्य् आरोपितं शान्तघोरमूढस्वरूपं निवर्तयति। पुरुषस्य हि चैतन्यं स्वरूपम् अनौपाधिकं न तु बुद्धिबोधः शान्तादिरूप अउपाधिको हि स स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुमसंनिधानोपाधिर् अरुणिमा। न चोपाधिनिवृत्ताव् उपहितनिवृत्तिर् अतिप्रसङ्गाद् इति भावः। स्वरूपस्य चाभेदेऽपि भेदं विकल्प्याधिकरणभाव उक्त इति। अयम् एवार्थो भाष्यकृता द्योत्यते --- स्वरूपप्रतिष्ठेति। तदानीं निरोधावस्थायां न व्युत्थानावस्थायाम् इति भावः। स्याद् एतद् व्युत्थानावस्थायाम् अप्रतिष्ठिता स्वरूपे चितिशक्तिर् निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी स्यात्। व्युत्थाने वा स्वरूपप्रतिष्ठाने व्युत्थाननिरोधयोर् अविशेष इत्य् अत आह --- व्युत्थानचित्ते त्व् इति। न जातु कूटस्थनित्या चितिशक्तिः स्वरूपाच् च्यवते तेन यथा निरोधे तथैव व्युत्थानेऽपि। न खलु शुक्तिकायाः प्रमाणविपर्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः। प्रतिपत्ता तु तथाभूतम् अप्य् अतथात्वेनाभिमन्यते। निरोधसमाधिम् अपेक्ष्य संप्रज्ञातोऽपि व्युत्थानम् एवेति॥1.3॥

वृत्तिसारूप्यम् इतरत्र॥1.4॥

सूत्रान्तरम् अवतारयितुं पृच्छति --- कथं तर्हीति। यदि तथा भवन्ती न तथा केन तर्हि प्रकारेण प्रकाशत इत्य् अर्थः। हेतुपदम् अध्याहृत्य सूत्रं पठति --- दर्शितविषयत्वाद् वृत्तिसारूप्यम् इतरत्र। इतरत्र व्युत्थाने याश् चित्तवृत्तयः शान्तघोरमूढास् ता एवाविशिष्टा अभिन्ना वृत्तयो यस्य पुरुषस्य स तथोक्तः। सारूप्यम् इत्य् अत्र सशब्द एकपर्यायः। एतद् उक्तं भवति --- जपाकुसुमस्फटिकयोर् इव बुद्धिपुरुषयोः संनिधानाद् अभेदग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढोऽस्मीत्य् अध्यवस्यति। यथा मलिने दर्पणतले प्रतिबिम्बितं मुखं मलिनम् आरोप्य शोचत्य् आत्मानं मलिनोऽस्मीति। यद्य् अपि पुरुषसमारोपोऽपि शब्दादिविज्ञानवद् बुद्धिवृत्तिर् यद्य् अपि च प्राकृतत्वेनाचिद्रूपतयानुभाव्यस् तथापि बुद्धेः पुरुषत्वम् आपादयन् पुरुषवृत्तिर् इवानुभव इवावभासते। तथा चायम् अविपर्ययोऽप्य् आत्मा विपर्ययवान् इवाभोक्तापि भोक्तेव विवेकख्यातिरहितोऽपि तत्सहित इव विवेकख्यात्या प्रकाशते। एतच् च "चितेर् अप्रतिसंक्रमायास् तदाकारापत्तौ स्वबुद्धिसंवेदनम्" [योगसूत्रम् 4.22] इत्य् अत्र "सत्त्वपुरुषयोर् अत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः" [योगसूत्रम् 3.35] इत्य् अत्र चोपपादयिष्यते। एतच् च मतान्तरेऽपि सिद्धम् इत्य् आह --- तथा चेति। पञ्चशिखाचार्यस्य सूत्रम् "एकम् एव दर्शनं ख्यातिर् एव दर्शनम्" इति। ननु कथम् एकं दर्शनं यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जडत्वेनानुभाव्या दर्शनं ततोऽन्यत् पुरुषस्य चैतन्यम् अनुभवो दर्शनम् इत्य् अत आह --- ख्यातिर् एव दर्शनम् इति। उदयव्ययधर्मिणीं वृत्तिं ख्यातिं लौकिकीम् अभिप्रेत्यैतद् उक्तम् --- एकम् एवेति। चैतन्यं तु पुरुषस्य स्वभावो न ख्यातेः। तत् तु न लोकप्रत्यक्षगोचरोऽपि त्व् आगमानुमानगोचर इत्य् अर्थः। तद् अनेन व्युत्थानावस्थायां मूलकारणम् अविद्यां दर्शयता तद्धेतुकः संयोगो भोगहेतुः स्वस्वामिभावोऽपि सूचित इति तम् उपपादयन्न् आह --- चित्तं स्वं भवति पुरुषस्य स्वामिन इति संबन्धः। ननु चित्तजनितम् उपकारं भजमानो हि चेतनश् चित्तस्येशिता। न चास्य तज्जनितोपकारसंभवस् तदसंबन्धाद् अनुपकार्यत्वात् तत्संयोगतदुपकारभागित्वे परिणामप्रसङ्गाद् इत्य् अत आह --- अयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेनेति। न पुरुषसंयुक्तं चित्तम् अपि तु तत्संनिहितम्। संनिधिश् च पुरुषस्य न देशतः कालतो वा तदसंयोगात् किं तु योग्यतालक्षणः। अस्ति च पुरुषस्य भोक्तृशक्तिश् चित्तस्य भोगशक्तिः। तद् उक्तम् --- दृश्यत्वेनेति। शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्य् अर्थः। भोगश् च यद्य् अपि शब्दाद्याकारा वृत्तिश् चित्तस्य धर्मस् तथापि चित्तचैतन्ययोर् अभेदसमारोपाद् वृत्तिसारूप्यात् पुरुषस्येत्य् उक्तम्। तस्माच् चित्तेनासंयोगेऽपि तज्जनितोपकारभागिता पुरुषस्यापरिणामिता चेति सिद्धम्। ननु स्वस्वामिसंबन्धो भोगहेतुर् अविद्यानिमित्तो ऽविद्या तु किंनिमित्ता न खल्व् अनिमित्तं कार्यम् उत्पद्यते। यथाहुः ---

"स्वप्नादिवद् अविद्यायाः प्रवृत्तिस् तस्य किंकृता"।

इति शङ्काम् उपसंहारव्याजेनोद्धरति --- तस्माच् चित्तवृत्तिबोधे शान्तघोरमूढाकारचित्तवृत्त्युपभोगेऽनाद्यविद्यानिमित्तत्वाद् अनादिः संयोगो हेतुर् अविद्यावासनयोश् च संतानो बीजाङ्कुरसंतानवद् अनादिर् इति भावः॥1.4॥

वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः॥1.5॥

स्याद् एतत् पुरुषो हि शक्य उपदिश्यते। न च वृत्तिनिरोधो वृत्तीर् अविज्ञाय शक्यः। न च सहस्रेणापि पुरुषायुषैर् अलम् इमाः कश्चित्

परिगणयितुम्। असंख्याताश् च कथं निरोद्धव्या इत्य् आशङ्क्य तासाम् इयत्तास्वरूपप्रतिपादनपरं सूत्रम् अवतारयति --- ताः पुनर् निरोद्धव्या बहुत्वे सति चित्तस्य --- वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः। वृत्तिरूपोऽवयव्य् एकस् तस्य प्रमाणादयोऽवयवाः पञ्च। ततस् तदवयवा पञ्चतयी पञ्चावयवा वृत्तिर् भवति। ताश् च वृत्तयश् चैत्रमैत्रादिचित्तभेदाद् बह्व्य इति बहुवचनम् उपपन्नम्। एतद् उक्तं भवति --- चैत्रो वा मैत्रो वान्यो वा कश्चित् सर्वेषाम् एव तेषां वृत्तयः पञ्चतय्य एव नाधिका इति। चित्तस्येति चैकवचनं जात्यभिप्रायम्। चित्तानाम् इति तु द्रष्टव्यम्। तासाम् अवान्तरविशेषम् अनुष्ठानोपयोगिनं दर्शयति --- क्लिष्टाक्लिष्टा इति। अक्लिष्टा उपादाय क्लिष्टा निरोद्धव्यास् ता अपि परेण वैराग्येणेति। अस्य व्याख्यानं --- क्लेशहेतुका इति। क्लेशा अस्मितादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनां तास् तथोक्ताः। यद् वा पुरुषार्थप्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारणत्वेन क्लेशायैव प्रवृत्तिः। क्लेशः क्लिष्टं तद् आसाम् अस्तीति क्लिष्टा इति। यत एव क्लेशोपार्जनार्थम् अमूषां प्रवृत्तिर् अत एव कर्माशयप्रचये क्षेत्रीभूताः। प्रमाणादिना खल्व् अयं प्रतिपत्तार्थम् अवसाय तत्र सक्तो द्विष्टो वा कर्माशयम् आचिनोतीति भवन्ति धर्माधर्मप्रचयप्रसवभूमयो वृत्तयः क्लिष्टा इति। अक्लिष्टा व्याचष्टे --- ख्यातिविषया इति। विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिस् तया विषयिण्या तद्विषयं सत्त्वपुरुषविवेकम् उपलक्षयति। तेन सत्त्वपुरुषविवेकविषया यतोऽत एव गुणाधिकारविरोधिन्यः। कार्यारम्भणं हि गुणानाम् अधिकारो विवेकख्यातिपर्यवसानं च तद् इति चरिताधिकाराणां गुणानाम् अधिकारं विरुन्धन्तीति। अतस् ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः। स्याद् एतद् वीतरागजन्मादर्शनात् क्लिष्टवृत्तय एव सर्वे प्राणभृतः। न च क्लिष्टवृत्तिप्रवाहे भवितुम् अर्हन्त्य् अक्लिष्टा वृत्तयो न चामूषां भावेऽपि कार्यकारिता विरोधिम् अध्यपातित्वात् तस्मात् क्लिष्टानाम् अक्लिष्टाभिर् निरोधस् तासां च वैराग्येण परेणेति मनोरथमात्रम् इत्य् अत आह --- क्लिष्टप्रवाहेति। आगमानुमानाचार्योपदेशपरिशीलनलब्धजन्मनी अभ्यासवैराग्ये क्लिष्टच्छिद्रम् अन्तरा तत्र पतिताः स्वयम् अक्लिष्टा एव यद्य् अपि क्लिष्टप्रवाहपतिताः। न खलु शालग्रामे किरातशतसंकीर्णे प्रतिवसन्न् अपि ब्राह्मणः किरातो भवति। अक्लिष्टच्छिद्रेष्व् इति निदर्शनम्। क्लिष्टान्तरवर्तितया च क्लिष्टाभिर् अनभिभूता अक्लिष्टाः। स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावद् अभिभवन्तीत्य् आह --- तथाजातीयका इति। अक्लिष्टाभिर् वृत्तिभिर् अक्लिष्टाः संस्कारा इत्य् अर्थः। तद् इदं वृत्तिसंस्कारचक्रम् अनिशम् आवर्तते, आ निरोधसमाधेः। तद् एवंभूतं चित्तं निरोधावस्थं संस्कारशेषं भूत्वात्मकल्पेनावतिष्ठत इत्य् आपाततः प्रलयं वा गच्छतीति परमार्थतः। पिण्डीकृत्य सूत्रार्थम् आह --- ता इति। पञ्चधेत्य् अर्थकथनमात्रं न तु शब्दवृत्तिव्याख्यानम्। तयपः प्रकारेऽस्मरणात्॥1.5॥

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः॥1.6॥

ताः स्वसंज्ञाभिर् उद्दिशति --- प्रमाणविपर्ययविकल्पनिद्रास्मृतयः। निर्देशे यथावचनं विग्रहश् चार्थे द्वंद्वः समास इतरेतरयोगे। यथा --- अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिर् अविद्या [योगसूत्रम् 2.5] इत्य् उक्तेऽपि न दिङ्मोहालातचक्रादिविभ्रमा व्युदस्यन्त एवम् इहापि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसद्भावशङ्का न व्युदस्यतेति तन्निरासाय वक्तव्यं पञ्चतय्य इति। एतावत्य एव वृत्तयो नापराः सन्तीति दर्शितं भवति॥1.6॥

प्रत्यक्षानुमानागमाः प्रमाणानि॥1.7॥

तत्र प्रमाणवृत्तिं विभजन् सामान्यलक्षणम् आह --- प्रत्यक्षानुमानागमाः प्रमाणानि। अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमा। तत्कारणं प्रमाणम्। विभागवचनं च न्यूनाधिकसंख्याव्यवच्छेदार्थम्। तत्र सकलप्रमाणमूलत्वात् प्रथमतः प्रत्यक्षं लक्षयति --- इन्द्रियेति। अर्थस्येति समारोपितत्वं निषेधति। तद्विषयेति बाह्यगोचरतया ज्ञानाकारगोचरत्वं निवारयति। चित्तवर्तिनो ज्ञानाकारस्य बाह्यज्ञेयसंबन्धं दर्शयति --- बाह्यवस्तूपरागाद् इति। व्यवहितस्य तदुपरागे हेतुम् आह --- इन्द्रियप्रणालिकयेति। सामान्यमात्रम् अर्थ इत्य् एके। विशेषा एवेत्य् अन्ये। सामान्यविशेषतद्वत्तेत्य् अपरे वादिनः प्रतिपन्नास् तन्निरासायाह --- सामान्यविशेषात्मन इति। न तद्वत्ता किं तु तादात्म्यम् अर्थस्य। एतच् चैकान्तानभ्युपगम इत्य् अत्र प्रतिपादयिष्यते। अनुमानागमविषयात् प्रत्यक्षविषयं व्यवच्छिनत्ति --- विशेषावधारणप्रधानेति। यद्य् अपि सामान्यम् अपि प्रत्यक्षे प्रतिभासते तथापि विशेषं प्रत्युपसर्जनीभूतम् इत्य् अर्थः। एतच् च साक्षात्कारोपलक्षणपरम्। तथा च विवेकख्यातिर् अपि लक्षिता भवति। फलविप्रतिपत्तिं निराकरोति --- फलं पौरुषेयश् चित्तवृत्तिबोध इति। ननु पुरुषवर्ती बोधः कथं चित्तगताया वृत्तेः फलम्। न हि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियत इत्य् अत आह --- अविशिष्ट इति। न हि पुरुषगतो बोधो जन्यते, अपि तु चैतन्यम् एव बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्यार्थाकारया तदाकारताम् आपद्यमानं फलम्। तच् च तथाभूतं बुद्धेर् अविशिष्टं बुद्ध्यात्मकं, वृत्तिश् च बुद्ध्यात्मिकेति सामानाधिकरण्याद् युक्तः प्रमाणफलभाव इत्य् अर्थः। एतच् चोपपादयिष्याम इत्य् आह --- प्रतिसंवेदीति। प्रत्यक्षानन्तरं प्रवृत्त्यादिलिङ्गकश्रोतृबुद्ध्यनुमानप्रभवसंबन्धदर्शनसमुत्थतयागमस्यानुमानजत्वाद् अनुमितस्य चागमेनान्वाख्यानाद् आगमात् प्राग् अनुमानं लक्षयति --- अनुमेयस्येति। जिज्ञासितधर्मविशिष्टो धर्म्यनुमेयस् तस्य तुल्यजातीयाः साध्यधर्मसामान्येन समानार्थाः सपक्षास् तेष्व् अनुवृत्त इत्य् अनेन विरुद्धत्वम् असाधारणत्वं च साधनधर्मस्य निराकरोति। भिन्नजातीया असपक्षास् ते च सपक्षाद् अन्ये तद्विरुद्धास् तदभाववन्तश् च, तेभ्यो व्यावृत्तस् तद् अनेन साधारणानैकान्तिकत्वम् अपाकरोति। संबध्यत इति संबन्धो लिङ्गम् अनेन पक्षधर्मतां दर्शयन्न् असिद्धतां निवारयति। तद्विषया तन्निबन्धना, "षिञ् बन्धने" [धातुपाठः 5] इत्य् अस्माद् विषयपदव्युत्पत्तेः। सामान्यावधारणेति प्रत्यक्षविषयाद् व्यवच्छिनत्ति। संबन्धसंवेदनाधीनजन्मानुमानं विशेषेषु संबन्धग्रहणाभावेन सामान्यम् एव सुकरसंबन्धग्रहणं गोचरयतीति। उदाहरणम् आह --- यथेति। चो हेत्वर्थे। विन्ध्यो ऽगतिर् यतस् तस्मात् तस्याप्राप्तिर् अतो गतिनिवृत्तौ प्राप्तेर् निवृत्तिर् देशान्तरप्राप्तेर् गतिमच् चन्द्रतारकं चैत्रवद् इति सिद्धम्। आगमस्य वृत्तेर् लक्षणम् आह --- आप्तेनेति। तत्त्वदर्शनकारुण्यकरणपाटवाभिसंबन्ध आप्तिस् तया वर्तत इत्य् आप्तस् तेन दृष्टोऽनुमितो वार्थः। श्रुतस्य पृथग् अनुपादानं तस्य दृष्टानुमितमूलत्वेन ताभ्याम् एव चरितार्थत्वाद् आप्तचित्तवर्तिज्ञानसदृशस्य

ज्ञानस्य श्रोतृचित्ते समुत्पादः स्वबोधसंक्रान्तिस् तस्यै, अर्थ उपदिश्यते श्रोतृहिताहितप्राप्तिपरिहारोपायतया प्रज्ञाप्यते। शेषं सुगमम्। यस्यागमस्याश्रद्धेयार्थो वक्ता, यथा यान्य् एव दश दाडिमानि तानि षड् अपूपा भविष्यन्तीति। न दृष्टानुमितार्थो यथा चैत्यं वन्देत स्वर्गकाम इति। स आगमः प्लवते। नन्व् एवं मन्वादीनाम् अप्य् आगमः प्लवेत। न हि तेऽपि दृष्टानुमितार्थाः। यथाहुः ---

"यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः। स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः।" [मनुस्मृतिः 2.7]

इत्य् अत आह --- मूलवक्तरि त्व् इति। मूलवक्ता हि तत्रेश्वरो दृष्टानुमितार्थ इत्य् अर्थः॥1.7॥

विपर्ययो मिथ्याज्ञानम् अतद्रूपप्रतिष्ठम्॥1.8॥

विपर्ययो मिथ्याज्ञानम् अतद्रूपप्रतिष्ठम्। विपर्यय इति लक्ष्यनिर्देशः। मिथ्याज्ञानम् इत्यादि लक्षणम्। यज् ज्ञानप्रतिभासिरूपं, तद्रूपाप्रतिष्ठम् एवातद्रूपप्रतिष्ठम्। यथाश्राद्धभोजीति। अतः संशयोऽपि संगृहीतः। एतावांस् तु विशेषः --- तत्र ज्ञानारूढैवाप्रतिष्ठता द्विचन्द्रादेस् तु बाधज्ञानेन। नन्व् एवं विकल्पोऽपि तद्रूपाप्रतिष्ठानाद् विचारतो विपर्ययः प्रसज्येतेत्य् अत आह --- मिथ्याज्ञानम् इति। अनेन हि सर्वजनीनानुभवसिद्धो बाध उक्तः। स चास्ति विपर्यये न तु विकल्पे, तेन व्यवहारात्। पण्डितरूपाणाम् एव तु विचारयतां तत्र बाधबुद्धेर् इति। चोदयति --- स कस्मान् न प्रमाणम्। नोत्तरेणोपजातविरोधिना ज्ञानेन पूर्वं बाधनीयम् अपि तु पूर्वेणैव प्रथमम् उपजातेनानुपजातविरोधिना परम् इति भावः। परिहरति --- यतः प्रमाणेनेति। यत्र हि पूर्वापेक्षा परोत्पत्तिस् तत्रैवम् इह तु स्वकारणाद् अन्योन्यानपेक्षे ज्ञाने जायेते। तेनोत्तरस्य पूर्वम् अनुपमृद्योदयम् अनासादयतस् तदपबाधात्मैवोदयो न तु पूर्वस्योत्तरबाधात्मा, तस्य तदानीम् अप्रसक्तेः। तस्माद् अनुपजातविरोधिता बाध्यत्वे हेतुर् उपजातविरोधिता च बाधकत्वे। तस्माद् भूतार्थविषयत्वात् प्रमाणेनाप्रमाणस्य बाधनं सिद्धम्। उदाहरणम् आह --- तत्र प्रमाणेनेति। अस्य कुत्सिततत्वं हानाय दर्शयति --- सेयं पञ्चेति। अविद्यासामान्यम् अविद्यास्मितादिषु पञ्चसु पर्वस्व् इत्य् अर्थः। अव्यक्तमहदहंकारपञ्चतन्मात्रेष्व् अष्टस्व् अनात्मस्व् आत्मबुद्धिर् अविद्या तमः। एवं योगिनाम् अष्टस्व् अणिमादिकेष्व् अइश्वर्येष्व् अश्रेयःसु श्रेयोबुद्धिर् अष्टविधो मोहः पूर्वस्माज् जघन्यः। स चास्मितोच्यते। यथा योगेनाष्टविधम् अइश्वर्यम् उपादाय सिद्धो भूत्वा दृष्टानुश्रविकात् शब्दादीन् दश विषयान् भोक्ष्य इत्येवमात्मिका प्रतिपत्तिर् महामोहो रागः। एवम् एतेनैवाभिसंधिना प्रवर्तमानस्य केनचित् प्रतिबद्धत्वाद् अणिमादीनाम् अनुत्पत्तौ तन्निबन्धनस्य दृष्टानुश्रविकविषयोपभोगस्यासिद्धेः प्रतिबन्धकविषयः क्रोधः स तामिस्राख्यो द्वेषः। एवम् अणिमादिगुणसंपत्तौ दृष्टानुश्रविकविषयप्रत्युपस्थाने च कल्पान्ते सर्वम् एतन् नङ्क्ष्यतीति यस् त्रासः सोऽभिनिवेशो ऽन्धतामिस्रः। तद् उक्तम् ---

"भेदस् तमसोऽष्टविधो मोहस्य च दशविधो महामोहः। तामिस्रो ऽष्टादशधा तथा भवत्य् अन्धतामिस्रः" [सांख्यकारिका 48] इति॥1.8॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः॥1.9॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। ननु शब्दज्ञानानुपाती चेद् आगमप्रमाणान्तरगतो (आगमप्रमाणान्तर्गतो) विकल्पः प्रसज्येत निर्वस्तुकत्वे वा विपर्ययः स्याद् इत्य् अत आह --- स नेति। न प्रमाणविपर्ययान्तर्गतः। कस्माद् यतो वस्तुशून्यत्वेऽपीति प्रमाणान्तर्गतिं निषेधति। शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्ययान्तर्गतिम्। एतद् उक्तं भवति --- क्वचिद् अभेदे भेदम् आरोपयति क्वचित् पुनर् भिन्नानाम् अभेदम्। ततो भेदस्याभेदस्य च वस्तुनोऽभावात् तदाभासो विकल्पो न प्रमाणं नापि विपर्ययो व्यवहाराविसंवादाद् इति। शास्त्रप्रसिद्धम् उदाहरणम् आह --- तद्यथेति। किं विशेष्यं केन व्यपदिश्यते विशेष्यते नाभेदे विशेष्यविशेषणभावो न हि गवा गौर् विशेष्यते। किं तु भिन्नेनैव चैत्रेण। तद् इदम् आह --- भवति च व्यपदेशे वृत्तिः। व्यपदेशव्यपदेश्ययोर् भावो व्यपदेशः। विशेषणविशेष्यभाव इति यावत्। तस्मिन् वृत्तिर् वाक्यस्य यथा चैत्रस्य गौर् इति। शास्त्रीयम् एवोदाहरणान्तरं समुच्चिनोति --- तथेति। प्रतिषिद्धो वस्तुनः पृथिव्यादेर् धर्मः परिस्पन्दो यस्य स तथोक्तः। कोऽसौ निष्क्रियः पुरुषः। न खलु सांख्यीये राद्धान्तेऽभावो नाम कश्चिद् अस्ति वस्तुधर्मो येन पुरुषो विशेष्येतेत्य् अर्थः। क्वचित् पाठः प्रतिषिद्धा वस्तुधर्मा इति। तस्यार्थः --- प्रतिषेधव्याप्ताः प्रतिषिद्धा न वस्तुधर्माणां तद्व्याप्यता भावाभावयोर् असंबन्धाद् अथ च तथा प्रतीतिर् इति। लौकिकम् उदाहरणम् आह --- तिष्ठति बाण इति। यथा हि पचति भिनत्तीत्य् अत्र पूर्वापरीभूतः कर्मक्षणप्रचय एकफलावच्छिन्नः प्रतीयत एवं तिष्ठतीत्य् अत्रापि। पूर्वापरीभावम् एवाह --- स्थास्यति स्थित इति। ननु भवतु पाकवत् पूर्वापरीभूतयावस्थानक्रियया बाणाद् भिन्नया बाणस्य व्यपदेश इत्य् अत आह --- गतिनिवृत्तौ धात्वर्थमात्रं गम्यते। गतिनिवृत्तिर् एव तावत् कल्पिता तस्या अपि भावरूपत्वं तत्रापि पूर्वापरीभाव इत्य् अहो कल्पनापरम्परेत्य् अर्थः। अभावः कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते न पुनः पुरुषव्यतिरिक्तो धर्मः कश्चिद् इत्य् उदाहरणान्तरम् आह --- तथानुत्पत्तिधर्मेति। प्रमाणविपर्ययाभ्याम् अन्या न विकल्पवृत्तिर् इति वादिनो बहवः प्रतिपेदिरे। तत्प्रतिबोधनायोदाहरणप्रपञ्च इति मन्तव्यम्॥1.9॥

अभावप्रत्ययालम्बना वृत्तिर् निद्रा॥1.10॥

अभावप्रत्ययालम्बना वृत्तिर् निद्रा। अधिकृतं हि वृत्तिपदम् अनुवादकम्। प्रमाणविपर्ययविकल्पस्मृतीनां वृत्तित्वं प्रति परीक्षकाणाम् अविप्रतिपत्तेः। अतस् तद् अनूद्यते विशेषविधानाय। निद्रायास् तु वृत्तित्वे परीक्षकाणाम् अस्ति विप्रतिपत्तिर् इति वृत्तित्वं विधेयम्। न च प्रकृतम्

अनुवादकं विधानाय कल्पत इति पुनर् वृत्तिग्रहणम्। जाग्रत्स्वप्नवृत्तीनाम् अभावस् तस्य प्रत्ययः कारणं बुद्धिसत्त्वाच् छादकं तमस् तद् एवालम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर् निद्रा। बुद्धिसत्त्वे हि त्रिगुणे यदा सत्त्वरजसी अभिभूय समस्तकरणावरकम् आविरस्ति तमस् तदा बुद्धेर् विषयाकारपरिणामाभावाद् उद्भूततमोमयीं बुद्धिम् अवबुध्यमानः पुरुषः सुषुप्तोऽन्तःसंज्ञ इत्य् उच्यते। कस्मात् पुनर् निरुद्धकैवल्ययोर् इव वृत्त्यभाव एव न निद्रेत्य् अत आह --- सा च संप्रबोधे प्रत्यवमर्शात् सोपपत्तिकात् स्मरणात् प्रत्ययविशेषः। कथं, यदा हि सत्त्वसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्शः सुप्तोत्थितस्य भवति सुखम् अहम् अस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति स्वच्छीकरोतीति। यदा तु रजःसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्श इत्य् आह --- दुःखम् अहम् अस्वाप्सं स्त्यानम् अकर्मण्यं मे मनः कस्माद् यतो भ्रमत्य् अनवस्थितम्। नितान्ताभिभूतरजःसत्त्वे तमःसमुल्लासे स्वापे प्रबुद्धस्य प्रत्यवमर्शम् आह --- गाढं मूढोऽहम् अस्वाप्सं गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं मुषितम् इव तिष्ठतीति। साध्यव्यतिरेके हेतुव्यतिरेकम् आह --- न खल्व् अयम् इति। प्रबुद्धस्य प्रबुद्धमात्रस्य। तदाश्रिताश् चेति बोधकाले, प्रत्ययानुभवे वृत्त्यभावकारणानुभव इत्य् अर्थः। ननु प्रमाणादयो व्युत्थानचित्ताधिकरणा निरुध्यन्तां समाधिप्रतिपक्षत्वान् निद्रायास् त्व् एकाग्रवृत्तितुल्यायाः कथं समाधिप्रतिपक्षतेत्य् अत आह --- सा च समाधाव् इति। एकाग्रतुल्यापि तामसत्वेन निद्रा सबीजनिर्बीजसमाधिप्रतिपक्षेति सापि निरोद्धव्येत्य् अर्थः॥1.10॥

अनुभूतविषयासंप्रमोषः स्मृतिः॥1.11॥

अनुभूतविषयासंप्रमोषः स्मृतिः। प्रमाणादिभिर् अनुभूते विषये योऽसंप्रमोषो ऽस्तेयं सा स्मृतिः। संस्कारमात्रजस्य हि ज्ञानस्य संस्कारकारणानुभवावभासितो विषय आत्मीयस् तदधिकविषयपरिग्रहस् तु संप्रमोषः स्तेयम्। कस्मात् सादृश्यात्। "मुष स्तेये" [धातुपाठः 9] इत्य् अस्मात् प्रमोषपदव्युत्पत्तेः। एतद् उक्तं भवति --- सर्वे प्रमाणादयोऽनधिगतम् अर्थं सामान्यतः प्रकारतो वाधिगमयन्ति। स्मृतिः पुनर् न पूर्वानुभवमर्यादाम् अतिक्रामति। तद्विषया तदूनविषया वा न तु तदधिकविषया। सोऽयं वृत्त्यन्तराद् विशेषः स्मृतेर् इति। विमृशति --- किं प्रत्ययस्येति। ग्राह्यप्रवणत्वाद् अनुभवस्य स्वानुभवाभावात् तज्जः संस्कारो ग्राह्यम् एव स्मारयतीति प्रतिभाति। अनुभवमात्रजनितत्वाच् चानुभवम् एवेति। विमृश्योपपत्तित उभयस्मरणम् अवधारयति --- ग्राह्यप्रवणतया ग्राह्योपरक्तः। परमार्थतस् तु ग्राह्यग्रहणे एवोभयं तयोर् आकारं स्वरूपं निर्भासयति प्रकाशयति। स्वव्यञ्जकं कारणम् अञ्जनम् आकारो यस्य स तथोक्तः। स्वकारणाकार इत्य् अर्थः। व्यञ्जकम् उद्बोधकं तेनाञ्जनं फलाभिमुखीकरणं यस्येति वेत्य् अर्थः। ननु यदि कारणविचारेण बुद्धिस्मरणयोः सारूप्यं कस् तर्हि भेद इत्य् अत आह --- तत्र ग्रहणेति। ग्रहणम् उपादानं, न च गृहीतस्योपात्तस्योपादानं संभवति। तद् अनेनानधिगतबोधनं बुद्धिर् इत्य् उक्तम्। ग्रहणाकारो ग्रहणरूपं पूर्वं प्रधानं यस्याः सा तथोक्ता। विकल्पितश् चायम् अभेदेऽपि गुणप्रधानभाव इति। ग्राह्याकारः पूर्वः प्रथमो यस्याः सा तथोक्ता। इदम् एव च ग्राह्याकारस्य ग्राह्यस्य पूर्वत्वं यद् वृत्त्यन्तरविषयीकृतत्वम् अर्थस्य। तद् अनेन वृत्त्यन्तरविषयीकृतगोचरा स्मृतिर् इत्य् उक्तं भवति। सोऽयम् असंप्रमोष इति। नन्व् अस्ति स्मृतेर् अपि संप्रमोषः। दर्शयति हि पित्रादेर् अतीतस्य देशकालान्तरानुभूतस्याननुभूतचरदेशकालान्तरसंबन्धः स्वप्न इत्य् अत आह --- सा च द्वयीति। भावितः कल्पितः स्मर्तव्यो यया सा तथोक्ता। अभावितोऽकल्पितः पारमार्थिक इति यावत्। नेयं स्मृतिर् अपि तु विपर्ययस् तल्लक्षणोपपन्नत्वात् स्मृत्याभासतया तु स्मृतिर् उक्ता। प्रमाणाभासम् इव प्रमाणम् इति भावः। कस्मात् पुनर् अन्ते स्मृतेर् उपन्यास इत्य् अत आह --- सर्वाः स्मृतय इति। अनुभवः प्राप्तिः। प्राप्तिपूर्वा वृत्तिः स्मृतिस् ततः स्मृतीनाम् उपजन इत्य् अर्थः। ननु ये पुरुषं क्लिश्नन्ति ते निरोद्धव्याः प्रेक्षावता। क्लेशाश् च तथा। न च वृत्तयः, तत् किमर्थम् आसां निरोध इत्य् अत आह --- सर्वाश् चैता इति। सुगमम्॥ 1.11॥

अभ्यासवैराग्याभ्यां तन्निरोधः॥1.12॥

निरोधोपायं पृच्छति --- अथेति। सूत्रेणोत्तरम् आह --- अभ्यासवैराग्याभ्यां तन्निरोधः। अभ्यासवैराग्ययोर् निरोधे जनयितव्येऽवान्तरव्यापारभेदेन समुच्चयो न तु विकल्प इत्य् आह --- चित्तनदीति। प्राग्भारः प्रबन्धः। निम्नता गम्भीरता, अगाधतेति यावत्॥ 1.12॥

तत्र स्थितौ यत्नोऽभ्यासः॥1.13॥

तत्राभ्यासस्य स्वरूपप्रयोजनाभ्यां लक्षणम् आह --- तत्र स्थितौ यत्नोऽभ्यासः। तद् व्याचष्टे --- चित्तस्यावृत्तिकस्य राजसतामसवृत्तिरहितस्य प्रशान्तवाहिता विमलता सात्त्विकवृत्तिवाहितैकाग्रता स्थितिः। तदर्थ इति। स्थिताव् इति निमित्तसप्तमी व्याख्याता। यथा "चर्मणि द्वीपिनं हन्ति" इति। प्रयत्नम् एव पर्यायाभ्यां विशदयति --- वीर्यम् उत्साह इति। तस्येच्छायोनिताम् आह --- तत्संपिपादयिषया। तद् इति स्थितिं परामृशति। प्रयत्नस्य विषयम् आह --- तत्साधनेति। स्थितिसाधनान्य् अन्तरङ्गबहिरङ्गाणि यमनियमादीनि। साधनगोचरः कर्तृव्यापारो न फलगोचर इति॥1.13॥

स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः॥1.14॥

ननु व्युत्थानसंस्कारेणानादिना परिपन्थिना प्रतिबद्धो ऽभ्यासः कथं स्थित्यै कल्पत इत्य् अत आह --- स तु दीर्घकालनैरन्तर्यसत्कारासेवितो

दृढभूमिः। सोऽयम् अभ्यासो विशेषणत्रयसंपन्नः सन् दृढावस्थो न सहसा व्युत्थानसंस्कारैर् अभिभूतस्थितिरूपविषयो भवति। यदि पुनर् एवंभूतम् अप्य् अभ्यासं कृत्वोपरमेत् ततः कालपरिवासेनाभिभूयेत। तस्मान् नोपरन्तव्यम् इति भावः॥1.14॥

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्॥1.15॥

वैराग्यम् आह --- दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्। चेतनाचेतनेषु दृष्टविषयेषु वितृष्णताम् आह --- स्त्रिय इति। अइश्वर्यम् आधिपत्यम्। अनुश्रवो वेदस् ततोऽधिगता आनुश्रविकाः स्वर्गादयः। तत्रापि वैतृष्ण्यम् आह --- स्वर्गेति। देहरहिता विदेहाः करणेषु लीनास् तेषां भावो वैदेह्यम्। अन्ये तु प्रकृतिम् एवात्मानम् अभिमन्यमानाः प्रकृत्युपासकाः प्रकृतौ साधिकारायाम् एव लीनास् तेषां भावः प्रकृतिलयत्वं तत्प्राप्तिविषये, आनुश्रविकविषये वितृष्णस्यानुश्रविकविषये वितृष्णो हि स्वर्गादिप्राप्तिविषये वितृष्ण इत्य् उच्यते। ननु यदि वैतृष्ण्यमात्रं वैराग्यं हन्त विषयाप्राप्ताव् अपि तद् अस्तीति वैराग्यं स्याद् इत्य् अत आह --- दिव्यादिव्येति। न वैतृष्ण्यमात्रं वैराग्यम् अपि तु दिव्यादिव्यविषय्संप्रयोगे ऽपि चित्तस्यानाभोगात्मिका। ताम् एव स्पष्टयति --- हेयोपादेयशून्या। आसङ्गद्वेषरहितोपेक्षाबुद्धिर् वशीकारसंज्ञा। कुतः पुनर् इयम् इत्य् अत्राह --- प्रसंख्यानबलाद् इति। तापत्रयपरीतता विषयाणां दोषस् तत्परिभावनया तत्साक्षात्कारः प्रसंख्यानं तद्बलाद् इत्य् अर्थः। यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति चतस्रः संज्ञा इत्य् आगमिनः। रागादयः खलु कषायाश् चित्तवर्तिनस् तैर् इन्द्रियाणि यथास्वं विषयेषु प्रवर्तन्ते, तन् मा प्रवर्तिषतेन्द्रियाणि तत्तद्विषयेष्व् इति तत्परिपाचनायारम्भः प्रयत्नः सा यतमानसंज्ञा। तदारम्भे सति केचित् कषायाः पक्वाः पच्यन्ते पक्ष्यन्ते च केचित्। तत्र पक्ष्यमाणेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा। इन्द्रियप्रवर्तनासमर्थतया पक्वानाम् अउत्सुक्यमात्रेण मनसि व्यवस्थानम् एकेन्द्रियसंज्ञा। अउत्सुक्यमात्रस्यापि निवृत्तिर् उपस्थितेष्व् अपि दिव्यादिव्यविषयेषूपेक्षाबुद्धिः संज्ञात्रयात् परा वशीकारसंज्ञा। एतयैव च पूर्वासां चरितार्थत्वान् न ताः पृथग् उक्ता इति सर्वम् अवदातम्॥1.15॥

तत् परं पुरुषख्यातेर् गुणवैतृष्ण्यम्॥1.16॥

अपरं वैराग्यम् उक्त्वा परम् आह --- तत् परं पुरुषख्यातेर् गुणवैतृष्ण्यम्। अपरवैराग्यस्य परं वैराग्यं प्रति कारणत्वम्। तत्र च द्वारम् आदर्शयति --- दृष्टानुश्रविकविषयदोषदर्शी विरक्त इति। अनेनापरं वैराग्यं दर्शितम्। पुरुषदर्शनाभ्यासाद् आगमानुमानाचार्योपदेशसमधिगतस्य पुरुषस्य दर्शनं तस्याभ्यासः पौनःपुन्येन निषेवणं तस्मात् तस्य दर्शनस्य शुद्धी रजस्तमःपरिहाण्या सत्त्वैकतानता तया यो गुणपुरुषयोः प्रकर्षेण विवेकः पुरुषः शुद्धो ऽनन्तस् तद्विपरीता गुणा इति, तेनाप्यायिता बुद्धिर् यस्य योगिनः स तथोक्तः। तद् अनेन धर्ममेघाख्यः समाधिर् उक्तः। स तथाभूतो योगी गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यः सर्वथा विरक्तः सत्त्वपुरुषान्यताख्याताव् अपि गुणात्मिकायां यावद् विरक्त इति। तत् तस्माद् द्वयं वैराग्यम्। पूर्वं हि वैराग्यं सत्त्वसमुद्रेकविधूततमसि रजःकणकलङ्कसंपृक्ते चित्तसत्त्वे। तच् च तौष्टिकानाम् अपि समानम्। ते हि तेनैव प्रकृतिलया बभूवुः। यथोक्तम् --- वैराग्यात् प्रकृतिलय इति। तत्र तयोर् द्वयोर् मध्ये यद् उत्तरं तज्ज्ञानप्रसादमात्रम्। मात्रग्रहणेन निर्विषयतां सूचयति। तद् एव हि तादृशं चित्तसत्त्वं रजोलेशमलेनाप्य् अपरामृष्टम् अस्याश्रयोऽत एव ज्ञानप्रसाद इत्य् उच्यते। चित्तसत्त्वं हि प्रसादस्वभावम् अपि रजस्तमःसंपर्कान् मलिनताम् अनुभवति। वैराग्याभ्यासविमलवारिधाराधौतसमस्तरजस्तमोमलं त्व् अतिप्रसन्नं ज्ञानप्रसादमात्रपरिशेषं भवति। तस्य गुणानुपादेयत्वाय दर्शयति --- यस्योदये सति योगी प्रत्युदितख्यातिः। ख्यातिविशेषे सति वर्तमानख्यातिमान् इत्य् अर्थः। प्रापणीयं कैवल्यं प्राप्तम्। यथा वक्ष्यति --- जीवन्न् एव विद्वान् मुक्तो भवति। संस्कारमात्रस्य च्छिन्नमूलस्य सिद्धत्वाद् इति भावः। कुतः प्राप्तं, यतः --- क्षीणाः क्षेतव्याः क्लेशा अविद्यादयः सवासनाः। नन्व् अस्ति धर्माधर्मसमूहो भवस्य जन्ममरणप्रबन्धस्य संक्रमः प्राणिनाम्। तत् कुतः कैवल्यम् इत्य् अत आह --- छिन्न इति। श्लिष्टानि निःसंधीनि पर्वाणि यस्य स तथोक्तः। धर्माधर्मसमूहस्य समूहिनः पर्वाणि तानि श्लिष्टानि। न हि जातु जन्तुर् मरणजन्मप्रबन्धेन त्यक्ष्यते। सोऽयं भवसंक्रमः क्लेशक्षये छिन्नः। यथा वक्ष्यति --- "क्लेशमूलः कर्माशयः" [योगसूत्रम् 2.12] "सति मूले तद्विपाकः" [योगसूत्रम् 2.13] इति। ननु प्रसंख्यानपरिपाकं धर्ममेघं च निरोधम् अन्तरा किं तद् अस्ति यज् ज्ञानप्रसादमात्रम् इत्य् अत आह --- ज्ञानस्यैवेति। धर्ममेघभेद एव परं वैराग्यं नान्यत्। यथा वक्ष्यति --- "प्रसंख्यानेऽप्य् अकुसीदस्य सर्वथा विवेकख्यातेर् धर्ममेघः समाधिः" [योगसूत्रम् 4.29] [इति,] "तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज् ज्ञेयम् अल्पम्" [योगसूत्रम् 4.31] इति च। तस्माद् एतस्य हि नान्तरीयकम् अविनाभावि कैवल्यम् इति॥1.16॥

वितर्कविचारानन्दास्मितारूपानुगमात् संप्रज्ञातः॥1.17॥

उपायम् अभिधाय सप्रकारोपेयकथनाय पृच्छति --- अथोपायद्वयेनेति। वितर्कविचारानन्दास्मितारूपानुगमात् संप्रज्ञातः। संप्रज्ञातपूर्वकत्वाद् असंप्रज्ञातस्य प्रथमं संप्रज्ञातोपवर्णनम्। संप्रज्ञातसामान्यं वितर्कविचारानन्दास्मितानां रूपैः स्वरूपैर् अनुगमात् प्रतिपत्तव्यम्। वितर्कं विवृणोति --- चित्तस्येति। स्वरूपसाक्षात्कारवती प्रज्ञाभोगः। स च स्थूलविषयत्वात् स्थूलः। यथा हि प्राथमिको धानुष्कः स्थूलम् एव लक्ष्यं विध्यत्य् अथ सूक्ष्मम् एवं प्राथमिको योगी स्थूलम् एव पाञ्चभौतिकं चतुर्भुजादि ध्येयं साक्षात्करोत्य् अथ सूक्ष्मम् इति। एवं चित्तस्यालम्बने सूक्ष्म आभोगः। स्थूलकारणभूतसूक्ष्मपञ्चतन्मात्रलिङ्गालिङ्गविषयो विचारः। तद् एवं ग्राह्यविषयं दर्शयित्वा ग्रहणविषयं दर्शयति --- आनन्द इति। इन्द्रिये स्थूल आलम्बने चित्तस्याभोगो ह्लाद आनन्दः। प्रकाशशीलतयां खलु सत्त्वप्रधानाद् अहंकाराद् इन्द्रियाण्य् उत्पन्नानि। सत्त्वं सुखम् इति तान्य् अपि सुखानीति तस्मिन्न् आभोगो ह्लाद इति। ग्रहीतृविषयं संप्रज्ञातम् आह --- एकात्मिका संविद् इति। अस्मिताप्रभवानीन्द्रियाणि। तेनैषाम् अस्मिता सूक्ष्मं रूपम्। सा चात्मना ग्रहीत्रा सह बुद्धिर् एकात्मिका संवित्। तस्यां च ग्रहीतुर् अन्तर्भावाद् भवति ग्रहीतृविषयः संप्रज्ञात

इति। चतुर्णाम् अपरम् अप्य् अवान्तरविशेषम् आह --- तत्र प्रथम इति। कार्यं कारणानुप्रविष्टं न कारणं कार्येण तद् अयं स्थूल आभोगः स्थूलसूक्ष्मेन्द्रियास्मिताकारणचतुष्टयानुगतो भवति। उत्तरे तु त्रिद्व्येककारणकास् त्रिद्व्येकरूपा भवन्ति। असंप्रज्ञाताद् भिनत्ति --- सर्व एत इति॥1.17॥

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः॥1.18॥

क्रमप्राप्तम् असंप्रज्ञातम् अवतारयितुं पृच्छति --- अथेति। विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः। पूर्वपदेनोपायकथनम् उत्तराभ्यां च स्वरूपकथनम्। मध्यमं पदं विवृणोति --- सर्ववृत्तीति। प्रथमं पदं व्याचष्टे --- तस्य परम् इति। विरामो वृत्तीनाम् अभावस् तस्य प्रत्ययः कारणं तस्याभ्यासस् तदनुष्ठानं पौनःपुन्यं तद् एव पूर्वं यस्य स तथोक्तः। अथापरं वैराग्यं निरोधकारणं कस्मान् न भवतीत्य् अत आह --- सालम्बनो हीति। कार्यसरूपं कारणं युज्यते न विरूपम्। विरूपं चापरं वैराग्यं सालम्बनं निरालम्बनसमाधिना कार्येण। तस्मान् निरालम्बनाद् एव ज्ञानप्रसादमात्रात् तस्योत्पत्तिर् युक्ता। धर्ममेघसमाधिर् एव हि नितान्तविगलितरजस्तमोमलाद् बुद्धिसत्त्वाद् उपजातस् तत्तद्विषयातिक्रमेण प्रवर्तमानोऽनन्तो विषयावद्यदर्शी समस्तविषयपरित्यागाच् च स्वरूपप्रतिष्ठः सन् निरालम्बनः संस्कारमात्रशेषस्य निरालम्बनस्य समाधेः कारणम् उपपद्यते सारूप्याद् इति। आलम्बनीकरणम् आश्रयणम् अभावप्राप्तम् इव वृत्तिरूपकार्याकरणान् निर्बीजो निरालम्बनः। अथवा बीजं क्लेशकर्माशयास् ते निष्क्रान्ता यस्मात् स तथा॥1.18॥

भवप्रत्ययो विदेहप्रकृतिलयानाम्॥1.19॥

निरोधसमाधेर् अवान्तरभेदं हानोपादानाङ्गम् आदर्शयति --- स खल्व् अयं निरोधसमाधिर् द्विविधः --- उपायप्रत्ययो भवप्रत्ययश् च। उपायो वक्ष्यमाणः श्रद्धादिः प्रत्ययः कारणं यस्य निरोधसमाधेः स तथोक्तः। भवन्ति जायन्ते ऽस्यां जन्तव इति भवोऽविद्या, भूतेन्द्रियेषु वा विकारेषु प्रकृतिषु वाव्यक्तमहदहंकारपञ्चतन्मात्रेष्व् अनात्मस्व् आत्मख्यातिस् तौष्टिकानां वैराग्यसंपन्नानां, स खल्व् अयं भवः प्रत्ययः कारणं यस्य निरोधसमाधेः स भवप्रत्ययः। तत्र तयोर् मध्य उपायप्रत्ययो योगिनां मोक्ष्यमाणानां भवति। विशेषविधानेन शेषस्य मुमुक्षुसंबन्धं निषेधति। केषां तर्हि भवप्रत्यय इत्य् अत्र सूत्रेणोत्तरम् आह --- भवप्रत्ययो विदेहप्रकृतिलयानाम्। विदेहाश् च प्रकृतिलयाश् च तेषाम् इत्य् अर्थः। तद् व्याचष्टे --- विदेहानां देवानां भवप्रत्ययः। भूतेन्द्रियाणाम् अन्यतमदात्मत्वेन (अन्यतमम् आत्मत्वेन) प्रतिपन्नास् तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरम् इन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषमनसः षाट्कौशिकशरीररहिता विदेहाः। ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदम् इवानुभवन्तः प्राप्नुवन्तो विदेहाः। अवृत्तिकत्वं च कैवल्येन सारूप्यं, साधिकारसंस्कारशेषता च वैरूप्यम्। संस्कारमात्रोपभोगेनेति क्वचित् पाठः। तस्यार्थः --- संस्कारमात्रम् एवोपभोगो यस्य न तु चित्तवृत्तिर् इत्य् अर्थः। प्राप्तावधयः स्वसंस्कारविपाकं तथाजातीयकम् अतिवाहयन्त्य् अतिक्रामन्ति पुनर् अपि संसारे विशन्ति। तथा च वायुप्रोक्तम् ---

"दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौतिकास् तु शतं पूर्णम्" इति।

तथा प्रकृतिलयाश् चाव्यक्तमहदहंकारपञ्चतन्मात्रेष्व् अन्यतमदात्मत्वेन (अन्यतमम् आत्मत्वेन) प्रतिपन्नास् तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरम् अव्यक्तादीनाम् अन्यतमस्मिंल् लीनाः (अन्यतमे लीनाः) साधिकारेऽचरितार्थे। एवं हि चरितार्थं चेतः स्याद् यदि विवेकख्यातिम् अपि जनयेद् अजनितसत्त्वपुरुषान्यताख्यातेस् तु चेतसोऽचरितार्थस्यास्ति साधिकारतेति। साधिकारे चेतसि प्रकृतिलीने कैवल्यपदम् इवानुभवन्ति, यावन् न पुनर् आवर्तते ऽधिकारवशाच् चित्तम् इति। प्रकृतिसाम्यम् उपगतम् अप्य् अवधिं प्राप्य पुनर् अपि प्रादुर्भवति ततो विविच्यते। यथा वर्षातिपाते मृद्भावम् उपगतो मण्डूकदेहः पुनर् अम्भोदवारिधारावसेकान् मण्डूकदेहभावम् अनुभवतीति। तथा च वायुप्रोक्तम् ---

"सहस्रं त्व् आभिमानिकाः। बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः॥ पूर्णं शतसहस्रं तु तिष्ठन्त्य् अव्यक्तचिन्तकाः। पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते" इति॥

तस् अस्य पुनर्भवप्राप्तिहेतुतया हेयत्वं सिद्धम्॥1.19॥

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्॥1.20॥

योगिनां तु समाधेर् उपायक्रमम् आह --- श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्। नन्व् इन्द्रियादिचिन्तका अपि श्रद्धावन्त एवेत्य् अत आह --- श्रद्धा चेतसः संप्रसादः। स चागमानुमानाचार्योपदेशसमधिगततत्त्वविषयो भवति हि चेतसः संप्रसादो ऽभिरुचिर् अतीच्छा श्रद्धा नेन्द्रियादिष्व् आत्माभिमानिनाम् अभिरुचिर् असंप्रसादो हि स व्यामोहमूलत्वाद् इत्य् अर्थः। कुतोऽसाव् एव श्रद्धेत्य् अत आह --- सा हि जननीव कल्याणी योगिनं पाति विमार्गपातजन्मनो ऽनर्थात्। सोऽयम् इच्छाविशेष इष्यमाणविषयं प्रयत्नं प्रसूत इत्य् आह --- तस्य हि श्रद्दधानस्य। तस्य विवरणं --- विवेकार्थिनो वीर्यम् उपजायते। स्मृतिर् ध्यानम् अनाकुलम् अविक्षिप्तं, समाधीयते योगाङ्गसमाधियुक्तं भवति।

यमनियमादिनान्तरीयकसमाध्युपन्यासेन च यमनियमादयोऽपि सूचिताः। तद् एवम् अखिलयोगाङ्गसंपन्नस्य संप्रज्ञातो जायत इत्य् आह --- समाहितचित्तस्येति। प्रज्ञाया विवेकः प्रकर्ष उपजायते। संप्रज्ञातपूर्वम् असंप्रज्ञातोत्पादम् आह --- तदभ्यासात् तत्रैव तत्तद्भूमिप्राप्तौ तत्तद्विषयाच् च वैराग्याद् असंप्रज्ञातः समाधिर् भवति। स हि कैवल्यहेतुः सत्त्वपुरुषान्यताख्यातिपूर्वो हि निरोधश् चित्तम् अखिलकार्यकरणेन चरितार्थम् अधिकाराद् अवसादयति॥1.20॥

तीव्रसंवेगानाम् आसन्नः॥1.21॥

ननु श्रद्धाद्अयश् चेद् योगोपायास् तर्हि सर्वेषाम् अविशेषेण समाधितत्फले स्याताम्। दृश्यते तु कस्यचित् सिद्धिः कस्यचिद् असिद्धिः कस्यचिच् चिरेण सिद्धिः कस्यचिच् चिरतरेण कस्यचित् क्षिप्रम् इत्य् अत आह --- ते खलु नव योगिन इति। उपायाः श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्कारादृष्टवशाद् येषां ते तथोक्ताः। संवेगो वैराग्यं तस्यापि मृदुमध्यतीव्रता प्राग्भवीयवासनादृष्टवशाद् एवेति तेषु यादृशां क्षेपीयसी सिद्धिस् तान् दर्शयति सूत्रेण --- तीव्रसंवेगानाम् आसन्न इति सूत्रम्। शेषं भाष्यम्। समाधेः संप्रज्ञातस्य फलम् असंप्रज्ञातस् तस्यापि कैवल्यम्॥1.21॥

मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः॥1.22॥

मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः। निगदव्याख्यातेन भाष्येण व्याख्यातम् इति॥1.22॥

ईश्वरप्रणिधानाद् वा॥1.23॥

सूत्रान्तरं पातयितुं विमृशति --- किम् एतस्माद् एवेति। न वाशब्दः संशयनिवर्तकः। ईश्वरप्रणिधानाद् वा। व्याचष्टे --- प्रणिधानाद् भक्तिविशेषान् मानसाद् वाचिकात् कायिकाद् वावर्जितोऽभिमुखीकृतस् तम् अनुगृह्णाति। अभिध्यानम् अनागतार्थेच्छा --- इदम् अस्याभिमतम् अस्त्व् इति। तन्मात्रेण न व्यापारान्तरेण। शेषं सुगमम्॥1.23॥

क्लेशकर्मविपाकाशयैर् अपरामृष्टः पुरुषविशेष ईश्वरः॥1.24॥

ननु चेतनाचेतनाभ्याम् एव व्यूढं नान्येन विश्वम्। ईश्वरश् चेद् अचेतनस् तर्हि प्रधानं प्रधानविकाराणाम् अपि प्रधानम् अध्यपातात् तथा च न तस्यावर्जनम् अचेतनत्वाद् अथ चेतनस् तथापि चितिशक्तेर् अउदासीन्याद् असंसारितया चास्मितादिविरहात् कुत आवर्जनम्। कुतश् चाभिध्यानम् इत्य् आशयवान् आह --- अथ प्रधानेति। अत्र सूत्रेणोत्तरम् आह --- क्लेशकर्मविपाकाशयैर् अपरामृष्टः पुरुषविशेष ईश्वरः। अविद्यादयः क्लेशाः क्लिश्नन्ति खल्व् अमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति। कुशलाकुशलानीति धर्माधर्मास् तेषां च कर्मजत्वाद् उपचारात् कर्मत्वम्। विपाको जात्यायुर्भोगाः। विपाकानुगुणा वासनास् ताश् चित्तभूमाव् आशेरत इत्य् आशयाः। न हि करभजातिनिर्वर्तकं कर्म प्राग्भवीयकरभभोगभावितां भावनां न यावद् अभिव्यनक्ति तावत् करभोचिताय भोगाय कल्पते। तस्माद् भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणेति। नन्व् अमी क्लेशादयो बुद्धिधर्मा न कथंचिद् अपि पुरुषं परामृशन्ति, तस्मात् पुरुषग्रहणाद् एव तदपरामर्शसिद्धेः कृतं क्लेशकर्मेत्यादिनेत्य् अत आह --- ते च मनसि वर्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते। कस्मात्, स हि तत्फलस्य भोक्ता चेतयितेति। तस्मात् पुरुषत्वाद् ईश्वरस्यापि तत्संबन्धः प्राप्त इति तत्प्रतिषेध उपपद्यत इत्य् आह --- यो ह्य् अनेन बुद्धिस्थेनापि पुरुषमात्रसाधारणेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः। विशिष्यत इति विशेषः पुरुषान्तराद् व्यवच्छिद्यते। विशेषपदस्य व्यावर्त्यं दर्शयितुकामः परिचोदनापूर्वं परिहरति --- कैवल्यं प्राप्तास् तर्हीति। प्रकृतिलयानां प्राकृतो बन्धः। वैकारिको बन्धो विदेहानाम्। दक्षिणादिबन्धो दिव्यादिव्यविषयभोगभाजाम्। तान्य् अमूनि त्रीणि बन्धनानि। प्रकृतिभावनासंस्कृतमनसो हि देहपातानन्तरम् एव प्रकृतिलयताम् आपन्ना इतीतरेषां पूर्वा बन्धकोटिः प्रज्ञायते, तेनोत्तरकोटिविधानमात्रम् इह तु पूर्वापरकोटिनिषेध इति। संक्षिप्य विशेषं दर्शयति --- स तु सदैव मुक्तः सदैवेश्वर इति। ज्ञानक्रियाशक्तिसंपद् अइश्वर्यम्। अत्र पृच्छति --- योऽसाव् इति। ज्ञानक्रिये हि न चिच्छक्तेर् अपरिणामिन्याः संभवत इति रजस्तमोरहितविशुद्धचित्तसत्त्वाश्रये वक्तव्ये। न चेश्वरस्य सदा मुक्तस्याविद्याप्रभवचित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावः संबन्धः संभवतीत्य् अत उक्तं --- प्रकृष्टसत्त्वोपादानाद् इति। नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनश् चित्तसत्त्वेन स्वस्वामिभावः। किं तु तापत्रयपरीतान् प्रेत्यभावमहार्णवाज् जन्तून् उद्धरिष्यामि ज्ञानधर्मोपदेशेन। न च ज्ञानक्रियासामर्थ्यातिशयसंपत्तिम् अन्तरेण तदुपदेशः। न चेयम् अपहतरजस्तमोमलविशुद्धसत्त्वोपादानं विनेत्य् आलोच्य सत्त्वप्रकर्षम् उपादत्ते भगवान् अपरामृष्टो ऽप्य् अविद्यया। अविद्याभिमानी चाविद्यायास् तत्त्वम् अविद्वान् भवति न पुनर् अविद्याम् अविद्यात्वेन सेवमानः। न खलु शैलूषो रामत्वम् आरोप्य तास् ताश् चेष्टा दर्शयन् भ्रान्तो भवति। तद् इदम् आहार्यम् अस्य रूपं न तात्त्विकम् इति। स्याद् एतत्। उद्दिधीर्षया भगवता सत्त्वम् उपादेयं तदुपादानेन च तदुद्दिधीर्षा, अस्या अपि प्राकृतत्वात् तथा चान्योन्याश्रय इत्य् अत उक्तम् --- शाश्वतिक इति। भवेद् एतद् एवं यदीदंप्रथमता सर्गस्य भवेद् अनादौ तु सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसंजिहीर्षावधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवाञ् जगत् संजहार। तदा चेश्वरचित्तसत्त्वं प्रणिधानवासितं प्रधानसाम्यम् उपगतम् अपि परिपूर्णो महाप्रलयावधौ प्रणिधानवासनावशात् तथैवेश्वरचित्तसत्त्वभावेन परिणमते। यथा चैत्रः श्वः प्रातर् एवोत्थातव्यं मयेति प्रणिधाय सुप्तस् तदैवोत्तिष्ठति प्रणिधानसंस्कारात्। तस्माद् अनादित्वाद् ईश्वरप्रणिधानसत्त्वोपादानयोः शाश्वतिकत्वेन नान्योन्याश्रयः। न चेश्वरस्य चित्तसत्त्वं

महाप्रलयेऽपि न प्रकृतिसाम्यम् उपैतीति वाच्यम्। यस्य हि न कदाचिद् अपि प्रधानसाम्यं न तत् प्राधानिकं नापि चितिशक्तिर् अज्ञत्वाद् इत्य् अर्थान्तरम् अप्रामाणिकम् आपद्येत। तच् चायुक्तं, प्रकृतिपुरुषव्यतिरेकेणार्थान्तराभावात्। सोऽयम् ईदृश ईश्वरस्य शाश्वतिक उत्कर्षः। स किं सनिमित्तः सप्रमाणक आहोस्विन् निर्निमित्तो निष्प्रमाणक इति। उत्तरं --- तस्य शास्त्रं निमित्तम्। श्रुतिस्मृतीतिहासपुराणानि शास्त्रम्। चोदयति --- शास्त्रं पुनः किंनिमित्तम्। प्रत्यक्षानुमानपूर्वं हि शास्त्रम्। न चेश्वरस्य सत्त्वप्रकर्षे कस्यचित् प्रत्यक्षम् अनुमानं वास्ति। न चेश्वरप्रत्यक्षप्रभवं शास्त्रम् इति युक्तम्। कल्पयित्वापि ह्य् अयं ब्रूयाद् आत्मैश्वर्यप्रकाशनायेति भावः। परिहरति --- प्रकृष्टसत्त्वनिमित्तम्। अयम् अभिसंधिः --- मन्त्रायुर्वेदेषु तावद् ईश्वरप्रणीतेषु प्रवृत्तिसामर्थ्याद् अर्थाव्यभिचारविनिश्चयात् प्रामाण्यं सिद्धम्। न चौषधिभेदानां तत्संयोगविशेषाणां च मन्त्राणां च तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैर् लौकिकप्रमाणव्यवहारी शक्तः कर्तुम् अन्वयव्यतिरेक्अउ। न चागमाद् अन्वयव्यतिरेकौ ताभ्यां चागमस् तत्संतानयोर् अनादित्वाद् इति प्रतिपादयितुं युक्तम्। महाप्रलये तत्संतानयोर् विच्छेदात्। न च तद्भावे प्रमाणाभावः। अभिन्नं प्रधानविकारो जगद् इति हि प्रतिपादयिष्यते। सदृशपरिणामस्य च विसदृशपरिणामता दृष्टा। यथा क्षीरेक्षुरसादेर् दधिगुडादिरूपम्। विसदृशपरिणामस्य पूर्वं सदृशपरिणामता च दृष्टा। तद् इह प्रधानेनापि महदहंकारादिरूपविसदृशपरिणामेन सता भाव्यं कदाचित् सदृशपरिणामेनापि। सदृशपरिणामश् चास्य साम्यावस्था। स च महाप्रलयः। तस्मान् मन्त्रायुर्वेदप्रणयनात् तावद् भगवतो विगलितरजस्तमोमलावरणतया परितः प्रद्योतमानं बुद्धिसत्त्वम् आस्थेयम्। तथा चाभ्युदयनिःश्रेयसोपदेशपरोऽपि वेदराशिर् ईश्वरप्रणीतस् तद्बुद्धिसत्त्वप्रकर्षाद् एव भवितुम् अर्हति। न च सत्त्वोत्कर्षे रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ संभवतः। तत् सिद्धं प्रकृष्टसत्त्वनिमित्तं शास्त्रम् इति। स्याद् एतत्। प्रकर्षकार्यतया प्रकर्षं बोधयच् छास्त्रं शेषवद् अनुमानं भवेन् न त्व् आगम इत्य् अत आह --- एतयोर् इति। न कार्यत्वेन बोधयत्य् अपि त्व् अनादिवाच्यवाचकभावसंबन्धेन बोधयतीत्य् अर्थः। ईश्वरस्य हि बुद्धिसत्त्वे प्रकर्षो वर्तते, शास्त्रम् अपि तद्वाचकत्वेन तत्र वर्तत इति। उपसंहरति --- एतस्माद् ईश्वरबुद्धिसत्त्वप्रकर्षवाचकाच् छास्त्राद् एतद् भवति ज्ञायते विषयेण विषयिणो लक्षणात् सदैवेश्वरः सदैव मुक्त इति। तद् एवं पुरुषान्तराद् व्यवच्छिद्येश्वरान्तराद् अपि व्यवच्छिनत्ति --- तच् च तस्येति। अतिशयविनिर्मुक्तिम् आह --- न तावद् इति। कुतः --- यद् एवेति। कस्मात् सर्वातिशयविनिर्मुक्तं तदैश्वर्यम् इत्य् अत आह --- तस्माद् यत्रेति। अतिशयनिष्ठाम् अप्राप्तानाम् अउपचारिकम् अइश्वर्यम् इत्य् अर्थः। साम्यविनिर्मुक्तिम् आह --- न च तत्समानम् इति। प्राकाम्यम् अविहतेच्छता तद्विघातान् ऊनत्वम् (तद्विघाताद् ऊनत्वम्) अनूनत्वे वा द्वयोर् अपि प्राकाम्यविघातः कार्यानुत्पत्तेर् उत्पत्तौ वा विरुद्धधर्मसमालिङ्गितम् एकदा कार्यम् उपलभ्येतेत्य् आशयवान् आह --- द्वयोश् चेति। अविरुद्धाभिप्रायत्वे वा प्रत्येकम् ईश्वरत्वे कृतम् अन्यैर् एकेनैवेशनायाः कृतत्वात्। संभूयकारित्वे वा न कश्चिद् ईश्वरः परिषद्वन् नित्येशनायोगिनां च पर्यायायोगात् कल्पनागौरवप्रसङ्गाच् चेति द्रष्टव्यम्। तस्मात् सर्वम् अवदातम्॥1.24॥

तत्र निरतिशयं सर्वज्ञबीजम्॥1.25॥

एवम् अस्य क्रियाज्ञानशक्तौ शास्त्रं प्रमाणम् अभिधाय ज्ञानशक्ताव् अनुमानं प्रमाणयति --- किं च --- तत्र निरतिशयं सर्वज्ञबीजम्। व्याचष्टे --- यद् इदम् इति। बुद्धिसत्त्वावरकतमोपगमतारतम्येन यद् इदम् अतीतानागतप्रत्युत्पन्नानां प्रत्येकं च समुच्चयेन च वर्तमानानाम् अतीन्द्रियाणां ग्रहणं, तस्य विशेषणम् अल्पं बह्व् इति सर्वज्ञबीजं कारणम्। कश्चित् किंचिद् एवातीतादि गृह्णाति कश्चिद् बहु कश्चिद् बहुतरं कश्चिद् बहुतमम् इति ग्राह्यापेक्षया ग्रहणस्याल्पत्वं बहुत्वं कृतम्। एतद् विवर्धमानं यत्र निष्क्रान्तम् अतिशयात् स सर्वज्ञ इति। तद् अनेन प्रमेयमात्रं कथितम्। अत्र प्रमाणयति --- अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्येति। साध्यनिर्देशः। निरतिशयत्वं काष्ठा। यतः परम् अतिशयवत्ता नास्तीति। तेन नावधिमात्रेण सिद्धसाधनम्। सातिशयत्वाद् इति हेतुः। यद् यत् सातिशयं तत् तत् सर्वं निरतिशयं, यथा कुवलामलकबिल्वेषु सातिशयं महत्त्वम् आत्मनि निरतिशयम् इति व्याप्तिं दर्शयति --- परिमाणवत्। न च गरिमादिभिर् गुणैर् व्यभिचार इति सांप्रतम्। न खल्व् अवयवगरिमातिशयी गरिमावयविनः किं त्वा परमाणुभ्य आन्त्यावयविभ्यो यावन्तः केचन तेषां प्रत्येकवर्तिनो गरिम्णः समाहृत्य गरिमा वर्धमानाभिमानः। ज्ञानं तु न प्रतिज्ञेयं समाप्यत इत्य् एकद्विबहुविषयतया युक्तं सातिशयम् इति न व्यभिचारः। उपसंहरति --- यत्र काष्ठेति। ननु सन्ति बहवस् तीर्थकरा बुद्धार्हतकपिलर्षिप्रभृतयस् तत् कस्मात् त एव सर्वज्ञा न भवन्त्य् अस्माद् अनुमानाद् इत्य् अत आह --- सामान्येति। कुतस् तर्हि तद्विशेषप्रतिपत्तिर् इत्य् अत आह --- तस्येति। बुद्धादिप्रणीत आगमाभासो न त्व् आगमः, सर्वप्रमाणबाधितक्षणिकनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वाद् इति भावः। तेन श्रुतिस्मृतीतिहासपुराणलक्षणाद् आगमत आगच्छन्ति बुद्धिम् आरोहन्ति अस्माद् अभ्युदयनिःश्रेयसोपाया इत्य् आगमः, तस्मात् संज्ञादिविशेषप्रतिपत्तिः। संज्ञाविशेषः शिवेश्वरादिः श्रुत्यादिषु प्रसिद्धः। आदिपदेन षडङ्गतादशाव्ययते संगृहीते। यथोक्तं वायुपुराणे ---

"सर्वज्ञता तृप्तिर् अनादिबोधः स्वतन्त्रता नित्यम् अलुप्तशक्तिः। अनन्तशक्तिश् च विभोर् विधिज्ञाः षड् आहुर् अङ्गानि महेश्वरस्य"॥ ( 12.31)

तथा ---

"ज्ञानं वैराग्यम् अइश्वर्यं तपः सत्यं क्षमा धृतिः। स्रष्टृत्वम् आत्मसंबोधो ह्य् अधिष्ठातृत्वम् एव च॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे" ( 10.60) इति।

स्याद् एतत्, नित्यतृप्तस्य भगवतो वैराग्यातिशयसंपन्नस्य स्वार्थे तृष्णासंभवात् कारुणिकस्य च सुखैकतानजनसर्जनपरस्य दुःखबहुलजीवलोकजननानुपपत्तेर् अप्रयोजनस्य च प्रेक्षावतः प्रवृत्त्यनुपपत्तेः क्रियाशक्तिशालिनोऽपि न जगत्क्रियेत्य् अत आह ---

तस्यात्मानुग्रहाभावेऽपीति। भूतानां प्राणिनाम् अनुग्रहः प्रयोजनं, शब्दाद्युपभोगविवेकख्यातिरूपकार्यकरणात् किल चरितार्थं चित्तं निवर्तते। ततः पुरुषः केवली भवति। अतस् तत्प्रयोजनाय कारुणिको विवेकख्यात्युपायं कथयति। तेनाचरितार्थत्वाच् चित्तस्य जन्तूनीश्वरः पुण्यापुण्यसहायः सुखदुःखे भावयन्न् अपि नाकारुणिकः। विवेकख्यात्युपायकथनाय भूतानुग्रहं द्वारम् आह --- ज्ञानधर्मोपदेशेनेति। ज्ञानं च धर्मश् च ज्ञानधर्मौ तयोर् उपदेशेन ज्ञानधर्मसमुच्चयाल् लब्धविवेकख्यातिपरिपाकात् कल्पप्रलये ब्रह्मणो दिनावसाने यत्र सत्यलोकवर्जं जगद् अस्तमेति। महाप्रलये ससत्यलोकस्य ब्रह्मणोऽपि निधने संसारिणः स्वकारणगामिनो ऽतस् तदा मरणदुःखभाजः, कल्पेत्य् उपलक्षणम् अन्यदापि स्वार्जितकर्मपाकवशेन जन्ममरणादिभाजः पुरुषानुद्धरिष्यामीति कैवल्यं प्राप्य पुरुषा उद्धृता भवन्तीत्य् अर्थः। एतच् च करुणाप्रयुक्तस्य ज्ञानधर्मोपदेशनं कापिलानाम् अपि सिद्धम् इत्य् आह --- तथा चोक्तं पञ्चशिखाचार्येण --- आदिविद्वान् कपिल इति। आदिविद्वान् इति पञ्चशिखाचार्यवचनम् आदिमुक्तस्वसंतानादिगुरुविषयं न त्व् अनादिमुक्तपरमगुरुविषयम्। आदिमुक्तेषु कदाचिन् मुक्तेषु विद्वत्सु कपिलोऽस्माकम् आदिविद्वान् मुक्तः स एव च गुरुर् इति। कपिलस्यापि जायमानस्य महेश्वरानुग्रहाद् एव ज्ञानप्राप्तिः श्रूयत इति। कपिलो नाम विष्णोर् अवतारविशेषः प्रसिद्धः। स्वयंभूस् तु हिरण्यगर्भः। तस्यापि सांख्ययोगप्राप्तिर् वेदे श्रूयत इति। स एवेश्वर आदिविद्वान् कपिलो विष्णुर् न स्वयंभूर् इति भावः। स्वायंभुवानां त्व् ईश्वर इति भावः॥1.25॥

पूर्वेषाम् अपि गुरुः कालेनानवच्छेदात्॥1.26॥

संप्रति भगवतो ब्रह्मादिभ्यो विशेषम् आह --- स एष इति। पातनिका --- स एष इति। सूत्रम् --- पूर्वेषाम् अपि गुरुः कालेनानवच्छेदात्। व्याचष्टे --- पूर्वे हीति। कालस् तु शतवर्षादिर् अवच्छेदार्थेनावच्छेदेन प्रयोजनेन नोपावर्तते न वर्तते। प्रकर्षस्य गतिः प्राप्तिः। प्रत्येतव्य आगमात्॥1.26॥

तस्य वाचकः प्रणवः॥1.27॥

तद् अनेन प्रबन्धेन भगवान् ईश्वरो दर्शितः। संप्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकम् आह --- तस्य वाचकः प्रणवः। व्याचष्टे --- वाच्य इति। तत्र परेषां मतं विमर्शद्वारेणोपन्यस्यति --- किम् अस्येति। वाचकत्वं प्रतिपादकत्वम् इत्य् अर्थः। परे हि पश्यन्ति यदि स्वाभाविकः शब्दार्थयोः संबन्धः संकेतेनास्माच् छब्दाद् अयम् अर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्येत ततो यत्र नास्ति स संबन्धस् तत्र संकेतशतेनापि न व्यज्येत। न हि प्रदीपव्यङ्ग्यो घटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यङ्क्तुम्। कृतसंकेतस् तु करभशब्दो वारणे वारणप्रतिपादको दृष्टः। ततः संकेतकृतम् एव वाचकत्वम् इति। विमृश्याभिमतम् अवधारयति --- स्थितोऽस्येति। अयम् अभिप्रायः --- सर्व एव शब्दाः सर्वाकारार्थाभिधानसमर्था इति। स्थित एवैषां सर्वाकारैर् अर्थैः स्वाभाविकः संबन्धः। ईश्वरसंकेतस् तु प्रकाशकश् च नियामकश् च। तस्येश्वरसंकेतासंकेतकृतश् चास्य वाचकापभ्रंशविभागः। तद् इदम् आह --- संकेतस् त्व् ईश्वरस्येति। निदर्शनम् आह --- यथेति। ननु शब्दस्य प्राधानिकस्य महाप्रलयसमये प्रधानभावम् उपगतस्य शक्तिर् अपि प्रलीना, ततो महदादिक्रमेणोत्पन्नस्यावाचकस्यैव माहेश्वरेण संकेतेन न शक्या वाचकशक्तिर् अभिव्यञ्जयितुं विनष्टशक्तित्वाद् इत्य् अत आह --- सर्गान्तरेष्व् अपीति। यद्य् अपि सह शक्त्या प्रधानसाम्यम् उपगतः शब्दस् तथापि पुनर् आविर्भवंस् तच्छक्तियुक्त एवाविर्भवति वर्षातिपातसमधिगतमृद्भाव इवोद्भिज्जो मेघविसृष्टवारिधारावसेकात्। तेन पूर्वसंबन्धसंकेतानुसारेण संकेतः क्रियते भगवतेति। तस्मात् संप्रतिपत्तेः सदृशव्यवहारपरम्पराया नित्यतया नित्यः शब्दार्थयोः संबन्धो न कूटस्थनित्य इत्य् आगमिकाः प्रतिजानते, न पुनर् आगमनिरपेक्षाः सर्गान्तरेष्व् अपि तादृश एव संकेत इति प्रतिपत्तुम् ईशत इति भावः॥1.27॥

तज्जपस् तदर्थभावनम्॥1.28॥

वाचकम् आख्याय प्रणिधानम् आह --- तज्जपस् तदर्थभावनम्। व्याचष्टे --- प्रणवस्येति। भावनं पुनः पुनश् चित्ते निवेशनम्। ततः किं सिध्यतीत्य् अत आह --- प्रणवम् इति। एकस्मिन् भगवत्य् आरमति चित्तम्। अत्रैव वैयासिकीं गाथाम् उदाहरति --- तथा चेति। तत ईश्वरः समाधितत्फललाभेन तम् अनुगृह्णाति॥1.28॥

ततः प्रत्यक्चेतनाधिगमोऽप्य् अन्तरायाभावश् च॥1.29॥

किं चापरम् अस्मात् --- ततः प्रत्यक्चेतनाधिगमोऽप्य् अन्तरायाभावश् च। प्रतीपं विपरीतम् अञ्चति विजानातीति प्रत्यक् स चासौ चेतनश् चेति प्रत्यक्चेतनोऽविद्यावान् पुरुषः। तद् अनेनेश्वराच् छाश्वतिकसत्त्वोत्कर्षसंपन्नाद् विद्यावतो निवर्तयति। प्रतीचश् चेतनस्याधिगमो ज्ञानं स्वरूपतो ऽस्य भवत्य् अन्तराया वक्ष्यमाणास् तदभावश् च। अस्य विवरणं --- ये तावद् इति। स्वम् आत्मा तस्य रूपम्। रूपग्रहणेनाविद्यासमारोपितान् धर्मान् निषेधति। नन्व् ईश्वरप्रणिधानम् ईश्वरविषयं कथम् इव प्रत्यक्चेतनं साक्षात्करोत्य् अतिप्रसङ्गाद् इत्य् अत आह --- यथैवेश्वर इति। शुद्धः कूटस्थनित्यतयोदयव्ययरहितः प्रसन्नः क्लेशवर्जितः केवलो धर्माधर्मापेतः। अत एवानुपसर्गः। उपसर्गा जात्यायुर्भोगाः। सादृश्यस्य किंचिद् भेदाधिष्ठानत्वाद् ईश्वराद् भिनत्ति --- बुद्धेः प्रतिसंवेदीति। तद् अनेन प्रत्यग्ग्रहणं व्याख्यातम्। अत्यन्तविधर्मिणोर् अन्यतरार्थानुचिन्तनं न तदितरस्य साक्षात्काराय कल्पते। सदृशार्थानुचिन्तनं तु सदृशान्तरसाक्षात्कारोपयोगिताम् अनुभवति एकशास्त्राभ्यास इव तत्सदृशार्थशास्त्रान्तरज्ञानोपयोगिताम्। प्रत्यासत्तिस् तु स्वात्मनि साक्षात्कारहेतुर् न परात्मनीति सर्वम् अवदातम्॥1.29॥

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास् तेऽन्तरायाः॥1.30॥

पृच्छति --- अथ क इति। सामान्येनोत्तरम् --- य इति। विशेषसंख्ये पृच्छति --- क इति। उत्तरं व्याधीत्यादिसूत्रम्। अन्तराया नव। एताश् चित्तवृत्तयो योगान्तराया योगविरोधिनश् चित्तस्य विक्षेपकाश् चित्तं खल्व् अमी व्याध्यादयो योगाद् विक्षिपन्त्य् अपनयन्तीति विक्षेपाः। योगप्रतिपक्षत्वे हेतुम् आह --- सहैत इति। संशयभ्रान्तिदर्शने तावद् वृत्तितया वृत्तिनिरोधप्रतिपक्षौ। येऽपि न वृत्तयो व्याधिप्रभृतयस् तेऽपि वृत्तिसाहचर्यात् तत्प्रतिपक्षा इत्य् अर्थः। पदार्थान् व्याचष्टे --- व्याधिर् इति। धातवो वातपित्तश्लेष्माणः शरीरधारणात्। अशितपीताहारपरिणामविशेषो रसः। करणानीन्द्रियाणि तेषां वैषम्यं न्यूनाधिकभाव इति। अकर्मण्यता कर्मानर्हता। संशय उभयकोटिस्पृग्विज्ञानम्। सत्य् अप्य् अतद्रूपप्रतिष्ठत्वेन संशयविपर्यासयोर् अभेदे, उभयकोटिस्पर्शास्पर्शरूपावान्तरविशेषविवक्षयात्र भेदेनोपन्यासः। अभावनम् अकरणं तत्राप्रयत्न इति यावत्। कायस्य गुरुत्वं कफादिना, चित्तस्य गुरुत्वं तमसा। गर्धस् तृष्णा। मधुमत्यादयः समाधिभूमयः। लब्धभूमेर् यदि तावतैव सुस्थितंमन्यस्य समाधिभ्रेषः स्यात् ततस् तस्या अपि भूमेर् अपायः स्यात्। यस्मात् समाधिप्रतिलम्भे तदवस्थितं स्यात् तस्मात् तत्र प्रयतितव्यम् इति॥1.30॥

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः॥1.31॥

न केवलं नवान्तराया दुःखादयोऽप्य् अस्य तत्सहभुवो भवन्तीत्य् आह --- दुःखेत्यादि। प्रतिकूलवेदनीयं दुःखम् आध्यात्मिकं शारीरं व्याधिवशान् मानसं च कामादिवशात्। आधिभौतिकं व्याघ्रादिजनितम्। आधिदैविकं ग्रहपीडादिजनितम्। तच् चेदं दुःखं प्राणिमात्रस्य प्रतिकूलवेदनीयतया हेयम् इत्य् आह --- येनाभिहता इति। अनिच्छतः प्राणो यद् बाह्यं वायुम् आचामति पिबति प्रवेशयतीति यावत् स श्वासः समाध्यङ्गरेचकविरोधी। अनिच्छतोऽपि प्राणो यत् कौष्ठ्यं वायुं निश्चारयति निःसारयति स प्रश्वासः समाध्यङ्गपूरकविरोधी॥1.31॥

तत्प्रतिषेधार्थम् एकतत्त्वाभ्यासः॥1.32॥

उक्तार्थोपसंहारसूत्रम् अवतारयति --- अथैत इति। अथोक्तार्थानन्तरम् उपसंहरन्न् इदं सूत्रम् आहेति संबन्धः। निरोद्धव्यत्वे हेतुर् उक्तः --- समाधिप्रतिपक्षा इति। यद्य् अपीश्वरप्रणिधानाद् इत्य् अभ्यासमात्रम् उक्तं तथापि वैराग्यम् इह तत्सहकारितया ग्राह्यम् इत्य् आह --- ताभ्याम् उक्तलक्षणाभ्याम् एवाभ्यासवैराग्याभ्यां निरोद्धव्याः। तत्र तयोर् अभ्यासवैराग्ययोर् मध्येऽभ्यासस्यानन्तरोक्तस्येति। तत्प्रतिषेधार्थम् इत्यादि। एकं तत्त्वम् ईश्वरः प्रकृतत्वाद् इति। वैनाशिकानां तत् सर्वम् एकाग्रम् एव चित्तं नास्ति किंचिद् विक्षिप्तम् इति तदुपदेशानां तदर्थानां च प्रवृत्तीनां वैयर्थ्यम् इत्य् आह --- यस्य त्व् इति। यस्य मते प्रत्यर्थेऽप्यर्यमाण एकस्मिन्न् अनेकस्मिन् वा नियतं यावद् अर्थावभासम् उत्पन्नं तत्रैव समाप्तम् अनन्यगामि। अर्थान्तरं तावत् प्रथमं गृहीत्वार्थान्तरम् अपि पश्चात् कस्मान् न गृह्णातीत्य् अत आह --- क्षणिकं च क्षणस्याभेद्यत्वेन पूर्वपश्चाद्भावस्याप्य् अभाव इति भावः। अस्मन्मते त्व् अक्षणिकं चित्तं स्वविषय एकस्मिन्न् अनेकस्मिन् वानवस्थितं प्रतिक्षणं तत्तद्विषयोपादानपरित्यागाभ्यां विषयानियतं विक्षिप्तम् अतो विक्षेपपरिणामम् अपनीय शक्यैकाग्रताधातुम् इति तदुपदेशप्रवृत्त्योर् नानर्थकत्वम् इत्य् आह --- यदि पुनर् इदम् इति। उपसंहरति --- अतो नेति। वैनाशिकम् उत्थापयति --- योऽपीति। मा भूद् एकस्मिन् क्षणिके चित्त एकाग्रताधानप्रयत्नः। चित्तसंताने त्व् अनादाव् अक्षणिके विक्षेपम् अपनीयैकाग्रताधास्यत इत्य् अर्थः। तद् एतद् विकल्प्य दूषयति --- तस्येति। तस्य दर्शन एकाग्रता यदि प्रवाहचित्तस्य चित्तसंतानस्य वा धर्मः। तत्रैकं क्रमवद् उत्पादेषु प्रत्ययेष्व् अनुगतं नास्ति प्रवाहचित्तम्। कुतः, यद् यावद् अस्ति तस्य सर्वस्य क्षणिकत्वाद् अक्षणिकस्य चासत्त्वाद् भवतां दर्शन इति भावः। द्वितीयं कल्पं गृह्णाति --- अथेति। सांवृतस्य प्रवाहस्यांशः प्रत्ययः परमार्थसंस् तस्य प्रत्ययस्यैकाग्रता प्रयत्नसाध्यो धर्मः। दूषयति --- स सर्वः सांवृतप्रवाहापेक्षया सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा। अतः परमार्थसत्तारूपेण प्रत्यर्थनियतत्वाद् यदर्थावभास उत्पन्नस् तत्र समाप्तत्वाद् एकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः, यद् अपनयेनैकाग्रताधीयत इति। उपसंहरति --- तस्माद् इति। इतोऽपि चित्तम् एकम् अनेकार्थम् अवस्थितं चेत्य् आह --- यदि चेति। यथा हि मैत्रेणाधीतस्य शास्त्रस्य न चैत्रः स्मरति। यथा वा मैत्रेणापचितस्य पुण्यस्य पापस्य वा कर्माशयस्य फलं तदसंबन्धी चैत्रो न भुङ्क्ते, एवं प्रत्ययान्तरदृष्टस्य प्रत्ययान्तरं न स्मरेत्। प्रत्ययान्तरोपचितस्य वा कर्माशयस्य फलं च न प्रत्ययान्तरम् उपभुञ्जीतेत्य् अर्थः। ननु नातिप्रसज्येते कार्यकारणभावे सतीति विशेषणाच् छ्राद्धवैश्वानरीयेष्ट्यादाव् अकर्तृमातृपितृपुत्रादिगामिफलदर्शनान् मधुररसभावितानां वाम्रबीजादीनां परम्परया फलमाधुर्यनियमाद् इत्य् अत आह --- समाधीयमानम् अप्य् एतद् इति। अयम् अभिसंधिः --- कः खल्व् एकसंतानवर्तिनां प्रत्ययानां संतानान्तरवर्तिभ्यः प्रत्ययेभ्यो विशेषो येनैकसंतानवर्तिना प्रत्ययेनानुभूतस्योपचितस्य च कर्माशयस्य तत्संतानवर्त्य् एव प्रत्ययः स्मर्ता भोक्ता च स्यान् नान्यसंतानवर्ती। न हि संतानो नाम कश्चिद् अस्ति वस्तुसन्। य एनं संतानं संतानान्तरवर्तिभ्यो भिन्द्यात्। न च काल्पनिको भेदः क्रियायाम् उपपद्यते। न खलु कल्पिताग्निभावो माणवकः पचति। न च कार्यकारणभावसंबन्धो ऽपि वास्तवः। सहभुवोः सव्येतरविषाणयोर् इवाभावाद् असहभुवोर् अपि प्रत्युत्पन्नाश्रयत्वायोगात्। न ह्य् अतीतानागतौ व्यासज्ज्य प्रत्युत्पन्नं वर्तितुम् अर्हतः। तस्मात् संतानेन वा कार्यकारणभावेन वा स्वाभाविकेनानुपहिताः परमार्थसन्तः प्रत्ययाः परस्परासंस्पर्शित्वेन स्वसंतानवर्तिभ्यः परसंतानवर्तिभ्यो वा प्रत्ययान्तरेभ्यो न भिद्यन्ते। सोऽयं गोमयं च पायसं चाधिकृत्य प्रवृत्तो न्यायो गोमयं पायसं गव्यत्वाद् उभयसिद्धपायसवद् इति। तम् आक्षिपति न्यायाभासत्वेन ततोऽप्य् अधिकत्वाद् इति। न चात्र कृतनाशाकृताभ्यागमं चोद्यम्। यतश् चित्तम् एव कर्मणां कर्तृ तद् एव तज्जनिताभ्यां सुखदुःखाभ्यां युज्यते। सुखदुःखे च चितिच्छायापन्नं चित्तं भुङ्क्त इति पुरुषे

भोगाभिमानश् चितिचित्तयोर् अभेदग्रहाद् इति। स्वप्रत्ययं प्रतीत्य समुत्पन्नानां स्वभाव एवैषां तादृशो यत् त एव स्मरन्ति फलं चोपभुञ्जते न त्व् अन्ये। न च स्वभावा नियोगपर्यनुयोगाव् अर्हन्ति एवं भवत मैवं भूतेति वा कस्मान् नैवम् इति चेति। यः पूर्वोक्ते न परितुष्यति तं प्रत्याह --- किं च स्वात्मेति। उदयव्ययधर्माणाम् अनुभवानाम् अनुभवस्मृतीनां च नानात्वेऽपि तदाश्रयम् अभिन्नं चित्तम् अहम् इति प्रत्ययः प्रतिसंदधानः कथम् अत्यन्तभिन्नान् प्रत्ययान् आलम्बेत। ननु ग्रहणस्मरणरूपकारणभेदात् पारोक्ष्यापारोक्ष्यरूपविरुद्धधर्मसंसर्गाद् वा न प्रत्यभिज्ञानं नामैकः प्रत्ययो यतः प्रत्ययिनश् चित्तस्यैकता स्याद् इत्य् अत आह --- स्वानुभवेति। ननु कारणभेदविरुद्धधर्मसंसर्गाव् एवात्र बाधकाव् उक्ताव् इत्य् अत आह --- न च प्रत्यक्षस्येति। प्रत्यक्षानुसारत एव सामग्र्यभेदः पारोक्ष्यापारोक्ष्यधर्माविरोधश् चोपपादितो न्यायकणिकायाम्। अक्षणिकस्य चार्थक्रिया न्यायकणिकाब्रह्मतत्त्वसमीक्षाभ्याम् उपपादितेति सर्वम् अवदातम्॥1.32॥

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश् चित्तप्रसादनम्॥1.33॥

अपरिकर्मितमनसोऽसूयादिमतः समाधितदुपायसंपत्त्यनुत्पादाच् चित्तप्रसादनोपायान् असूयादिविरोधिनः प्रतिपादयितुम् उपक्रमते --- यस्य चित्तस्यावस्थितस्येदम् इति। मैत्रीकरुणेत्यादिप्रसादनान्तम्। सुखितेषु मैत्रीं सौहार्दं भावयत ईर्ष्याकालुष्यं निवर्तते चित्तस्य। दुःखितेषु च करुणाम् आत्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसो निवर्तते। पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतोऽसूयाकालुष्यं चेतसो निवर्तते। अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं चेतसो निवर्तते। ततश् चास्य राजसतामसधर्मनिवृत्तौ सात्त्विकः शुक्लो धर्म उपजायते। सत्त्वोत्कर्षसंपन्नः संभवति वृत्तिनिरोधपक्षे। तस्य प्रसादस्वाभाव्याच् चित्तं प्रसीदति। प्रसन्नं च वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते। असत्यां पुनर् मैत्र्यादिभावनायां न त उपायाः स्थित्यै कल्पन्त इति॥1.33॥

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य॥1.34॥

तान् इदानीं स्थित्युपायान् आह --- प्रच्छर्दनविधारणाभ्यां वा प्राणस्य। वाशब्दो वक्ष्यमाणोपायान्तरापेक्षो विकल्पार्थः, न मैत्र्यादिभावनापेक्षया तया सह समुच्चयात्। प्रच्छर्दनं विवृणोति --- कौष्ठ्यस्येति। प्रयत्नविशेषाद् योगशास्त्रविहिताद् येन कौष्ठ्यो वायुर् नासिकापुटाभ्यां शनै रेच्यते। विधारणं विवृणोति --- विधारणं प्राणायामः। रेचितस्य प्राणस्य कौष्ठ्यस्य वायोर् यद् आयामो बहिर् एव स्थापनं न तु सहसा प्रवेशनम्। तद् एताभ्यां प्रच्छर्दनविधारणाभ्यां वायोर् लघुकृतशरीरस्य मनः स्थितिपदं लभते। अत्र चोत्तरसूत्रगतात् स्थितिनिबन्धनीतिपदात् स्थितिग्रहणम् आकृष्य संपादयेद् इत्य् अर्थप्राप्तेन संबन्धनीयम्॥1.34॥

विषयवती वा प्रवृत्तिर् उत्पन्ना मनसः स्थितिनिबन्धनी॥1.35॥

स्थित्युपायान्तरम् आह --- विषयवती वा प्रवृत्तिर् उत्पन्ना मनसः स्थितिनिबन्धनी। व्याचष्टे --- नासिकाग्रे धारयत इति। धारणाध्यानसमाधीन् कुर्वतस् तज्जयाद्या दिव्यगन्धसंवित्तत्साक्षात्कारः। एवम् अन्यास्व् अपि प्रवृत्तिषु योज्यम्। एतच् चागमात् प्रत्येतव्यं नोपपत्तितः। स्याद् एतत् किम् एतादृग्भिर् वृत्तिभिः कैवल्यं प्रत्यनुपयोगिनीभिर् इत्य् अत आह --- एता वृत्तयोऽल्पेनैव कालेनोत्पन्नाश् चित्तम् ईश्वरविषयायां वा विवेकख्यातिविषयायां वा स्थितौ निबध्नन्ति। नन्व् अन्यविषया वृत्तिः कथम् अन्यत्र स्थितिं निबध्नातीत्य् अत आह --- संशयं विधमन्ति अपसारयन्ति अत एव समाधिप्रज्ञायाम् इति। वृत्त्यन्तराणाम् अप्य् आगमसिद्धानां विषयवत्त्वम् अतिदिशति --- एतेनेति। नन्व् आगमादिभिर् अवगतेष्व् अर्थेषु कुतः संशय इत्य् अत आह --- यद्य् अपि हीति। श्रद्धामूलो हि योग उपदिष्टार्थैकदेशप्रत्यक्षीकरणे च श्रद्धातिशयो जायते। तन्मूलाश् च ध्यानादयोऽस्याप्रत्यूहं भवन्तीत्य् अर्थः॥1.35॥

विशोका वा ज्योतिष्मती॥1.36॥

विशोका वा ज्योतिष्मती। विगतशोका दुःखरहिता ज्योतिष्मती ज्योतिर् अस्या अस्तीति ज्योतिष्मती प्रकाशरूपा। हृदयपुण्डरीक इति। उदरोरसोर् मध्ये यत् पद्मम् अधोमुखं तिष्ठत्य् अष्टदलं रेचकप्राणायामेन तद् ऊर्ध्वमुखं कृत्वा तत्र चित्तं धारयेत्। तन्मध्ये सूर्यमण्डलम् अकारो जागरितस्थानं तस्योपरि चन्द्रमण्डलम् उकारः स्वप्नस्थानम्। तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम्। तस्योपरि परव्योमात्मकं ब्रह्मनादं तुरीयस्थानम् अर्धमात्रम् उदाहरन्ति ब्रह्मवादिनः। तत्र कर्णिकायाम् ऊर्ध्वमुखी सूर्यादिमण्डलमध्यगा ब्रह्मनाडी। ततोऽप्य् ऊर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी। तया खलु बाह्यान्य् अपि सूर्यादीनि मण्डलानि प्रोतानि। स हि चित्तस्थानम्। तस्यां धारयतो योगिनश् चित्तसंविद् उपजायते। उपपत्तिपूर्वकं बुद्धिसंविद आकारम् आदर्शयति --- बुद्धिसत्त्वं हीति। आकाशकल्पम् इति व्यापिताम् आह। सूर्यादीनां प्रभास् तासां रूपं तदाकारेण विकल्पते नानारूपा भवति। मनश् चात्र बुद्धिर् अभिमतं न तु महत्तत्त्वम्। तस्य च सुषुम्नास्थस्य वैकारिकाहंकारजन्मनः सत्त्वबहुलतया ज्योतीरूपता विवक्षिता। तत्तद्विषयगोचरतया च व्यापित्वम् अपि सिद्धम्। अस्मिताकार्ये मनसि समापत्तिं दर्शयित्वास्मितासमापत्तेः स्वरूपम् आह --- तथेति। शान्तम् अपगतरजस्तमस्तरङ्गम्। अनन्तं व्यापि। अस्मितामात्रं न पुनर् नानाप्रभारूपम्। आगमान्तरेण स्वमतं समीकरोति --- यत्रेदम् उक्तं पञ्चशिखेन तम् अणुं दुरधिगमत्वाद् आत्मानम् अहंकारास्पदम् अनुविद्यानुचिन्त्यास्मीत्येवं तावत् संजानीत इति। स्याद् एतत्। नानाप्रभारूपा भवतु ज्योतिष्मती कथम् अस्मितामात्ररूपा ज्योतिष्मतीत्य् अत आह --- एषा द्वयीति। विधूतरजस्तमोमलास्मितैव सत्त्वमयी ज्योतिर् इति भावः। द्विविधाया अपि ज्योतिष्मत्याः फलम् आह --- ययेति॥1.36॥

वीतरागविषयं वा चित्तम्॥1.37॥

वीतरागविषयं वा चित्तम्। वीतरागाः कृष्णद्वैपायनप्रभृतयस् तेषां चित्तं तद् एवालम्बनं तेनोपरक्तम् इति॥1.37॥

स्वप्ननिद्राज्ञानालम्बनं वा॥1.38॥

स्वप्ननिद्राज्ञानालम्बनं वा। यदा खल्व् अयं स्वप्ने विविक्तवनसंनिवेशवर्तिनीम् उत्कीर्णाम् इव चन्द्रमण्डलात् कोमलमृणालशकलानुकारिभिर् अङ्गप्रत्यङ्गैर् उपपन्नाम् अभिजातचन्द्रकान्तमणिमयीम् अतिसुरभिमालतीमल्लिकामालाहारिणीं मनोहरां भगवतो महेश्वरस्य प्रतिमाम् आराधयन्न् एव प्रबुद्धः प्रसन्नमनास् तदा ताम् एव स्वप्नज्ञानालम्बनीभूताम् अनुचिन्तयतस् तस्य तदेकाकारमनसस् तत्रैव चित्तं स्थितिपदं लभते। निद्रा चेह सात्त्विकी ग्रहीतव्या। यस्याः प्रबुद्धस्य सुखम् अहम् अस्वाप्सम् इति प्रत्यवमर्शो भवति। एकाग्रं हि तस्यां मनो भवति। तावन्मात्रेण चोक्तम् --- एतद् एव ब्रह्मविदो ब्रह्मणो रूपम् उदाहरन्ति सुप्तावस्थेति। ज्ञानं च ज्ञेयरहितं न शक्यं गोचरयितुम् इति ज्ञेयम् अपि गोचरीक्रियते॥1.38॥

यथाभिमतध्यानाद् वा॥1.39॥

यथाभिमतध्यानाद् वा। किं बहुना यद् एवाभिमतं तत्तद्देवतारूपम् इति॥1.39॥

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः॥1.40॥

कथं पुनः स्थितिपदसात्मीभावोऽवगन्तव्य इत्य् अत आह --- परमाणुपरममहत्त्वान्तोऽस्य वशीकारः। व्याचष्टे --- सूक्ष्म इति। उक्तम् अर्थं पिण्डीकृत्य वशीकारपदार्थम् आह --- एवं ताम् उभयीम् इति। वशीकारस्यावन्तरफलम् आह --- तद्वशीकाराद् इति॥1.40॥

क्षीणवृत्तेर् अभिजातस्येव मणेर् ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः॥1.41॥

तद् एवं चित्तस्थितेर् उपाया दर्शिताः। लब्धस्थितिकस्य चित्तस्य वशीकारोऽपि दर्शितः। संप्रति लब्धस्थितिकस्य चेतसः किंविषयः किंरूपश् च संप्रज्ञातो भवतीति पृच्छति --- अथेति। अत्रोत्तरं सूत्रम् अवतारयति --- तद् उच्यत इति। सूत्रं पठति --- क्षीणवृत्तेर् इत्यादि समापत्त्यन्तम्। तद् व्याचष्टे --- क्षीणेति। अभ्यासवैराग्याभ्यां क्षीणराजसतामसप्रमाणादिवृत्तेश् चित्तस्य। तस्य व्याख्यानं --- प्रत्यस्तमितप्रत्ययस्येति। तद् अनेन चित्तसत्त्वस्य स्वभावस्वच्छस्य रजस्तमोभ्याम् अनभिभव उक्तः। दृष्टान्तं स्पष्टयति --- यथेति। उपाश्रय उपाधिर् जपाकुसुमादिर् उपरक्तस् तच्छायापन्नः। उपाश्रयस्य यद् आत्मीयं रूपं लोहितनीलादि तद् एवाकारस् तेन लक्षितो निर्भासते। दार्ष्टान्तिके योजयति --- तथा ग्राह्येति। ग्राह्यं च तदालम्बनं च तेनोपरक्तं तदनुविद्धं, तद् अनेन ग्रहीतृग्रहणाभ्यां व्यवच्छिनत्ति। आत्मीयम् अन्तःकरणरूपम् अपिधाय ग्राह्यसमापन्नं ग्राह्यताम् इव प्राप्तम् इति यावत्। अतो ग्राह्यस्वरूपाकारेण निर्भासते। ग्राह्योपरागम् एव सूक्ष्मस्थूलताभ्यां विभजते --- भूतसूक्ष्मेति। विश्वभेदश् चेतनाचेतनस्वभावो गवादिर् घटादिश् च द्रष्टव्यः। तद् अनेन वितर्कविचारानुगतौ समाधी दर्शितौ। तथा ग्रहणेष्व् अपीन्द्रियेष्व् इति। गृह्यन्त एभिर् अर्था इति ग्रहणानीन्द्रियाणि। एतद् एव स्पष्टयति --- ग्रहणालम्बनेति। ग्रहणं चालम्बनं च तद् इति ग्रहणालम्बनं तेनोपरक्तम् अनुविद्धम् आत्मीयम् अन्तःकरणरूपम् अपिधाय ग्रहणम् इव बहिष्करणम् इवापन्नम् इति। तद् अनेनानन्दानुगतम् उक्त्वास्मितानुगतम् आह --- तथा ग्रहीतृपुरुषेति। अस्मितास्पदं हि ग्रहीता पुरुष इति भावः। पुरुषत्वाविशेषाद् अनेनैव मुक्तोऽपि पुरुषः शुकप्रह्लादादिः समाधिविषयतया संग्रहीतव्य इत्य् आह --- तथा मुक्तेति। उपसंहरंस् तत्स्थतदञ्जनतापदं व्याचष्टे --- तद् एवम् इति। तेषु ग्रहीतृग्रहणग्राह्येषु स्थितस्य धारितस्य ध्यानपरिपाकवशाद् अपहतरजस्तमोमलस्य चित्तसत्त्वस्य या तत्स्थतदञ्जनता तदाकारता सा समापत्तिः संप्रज्ञातलक्षणो योग उच्यते। तत्र च ग्रहीतृग्रहणग्राह्येष्व् इति सौत्रः पाठक्रमो ऽर्थक्रमविरोधान् नादर्तव्यः। एवं भाष्येऽपि प्रथमं भूतसूक्ष्मोपन्यासोऽप्य् अनादरणीय इति सर्वं रमणीयम्॥1.41॥

तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः॥1.42॥

सामान्यतः समापत्तिर् उक्ता। सेयम् अवान्तरभेदाच् चतुर्विधा भवति। तद्यथा सवितर्का निर्वितर्का सविचारा निर्विचारा चेति। तत्र सवितर्कायाः समापत्तेर् लक्षणम् आह --- तत्रेत्यादि। तासु समापत्तिषु मध्ये सवितर्का समापत्तिः प्रतिपत्तव्या। कीदृशी शब्दश् चार्थश् च ज्ञानं च तेषां विकल्पाः। वस्तुतो भिन्नानाम् अपि शब्दादीनाम् इतरेतराध्यासाद् विकल्पोऽप्य् एकस्मिन् भेदम् आदर्शयति भिन्नेषु चाभेदम्। तेन शब्दार्थज्ञानविकल्पैः संकीर्णा व्यामिश्रेत्य् अर्थः। तद्यथा गौर् इति शब्द इति। गौर् इत्य् उपात्तयोर् अर्थज्ञानयोः शब्दाभेदविकल्पो दर्शितः। गौर् इत्य् अर्थ इति। गौर् इत्य् उपात्तयोः शब्दज्ञानयोर् अर्थाभेदविकल्पः। गौर् इति ज्ञानम् इति। गौर् इत्य् उपात्तयोः शब्दार्थयोर् ज्ञानाभेदविकल्पः। तद् एवम् अविनिर्भागेन (अविनिर्भागेण) विभक्तानाम् अपि शब्दार्थज्ञानानां ग्रहणं लोके दृष्टं द्रष्टव्यम्। यद्य् अविभागेन ग्रहणं कुतस् तर्हि विभाग इत्य् अत

आह --- विभज्यमानाश् चान्वयव्यतिरेकाभ्यां परीक्षकैर् अन्ये शब्दधर्मा ध्वनिपरिणाममात्रस्य शब्दस्योदात्तादयो धर्मा अन्येऽर्थस्य जडत्वमूर्तत्वादयः, अन्ये प्रकाशमूर्तिविरहादयो ज्ञानस्य धर्मा इति। तस्माद् एतेषां विभक्तः पन्थाः स्वरूपभेदोन्नयनमार्गः। तत्र विकल्पते गवाद्यर्थे समापन्नस्येति। तद् अनेन योगिनोऽपरं प्रत्यक्षम् उक्तम्। शेषं सुगमम्॥1.42॥

स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का॥1.43॥

सूत्रं योजयितुं प्रथमतस् तावन् निर्वितर्कां व्याचष्टे --- यदा पुनर् इति। परिशुद्धिर् अपनयः। शब्दसंकेतस्मरणपूर्वे खल्व् आगमानुमाने प्रवर्तेते। संकेतश् चायं गौर् इति शब्दार्थज्ञानानाम् इतरेतराध्यासात्मा। ततश् चागमानुमानज्ञानविकल्पौ भवतः। तेन तत्पूर्वा समाधिप्रज्ञा सवितर्का। यदा पुनर् अर्थमात्रप्रवणेन चेतसार्थमात्राद्दतेन तदभ्यासान् नान्तरीयकताम् उपगता संकेतस्मृतिस् त्यक्ता, तत्त्यागे च श्रुतानुमानज्ञानविकल्पौ तन्मूलौ त्यक्तौ, तदा तच्छून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस् तत्स्वरूपमात्रतयैव न तु विकल्पितेनाकारेण परिच्छिद्यते। सा निर्वितर्का समापत्तिर् इति। तद् योगिनां परं प्रत्यक्षम् असदारोपगन्धस्याप्य् अभावात्। स्याद् एतत् परेण प्रत्यक्षेणार्थतत्त्वं गृहीत्वा योगिन उपदिशन्त्य् उपपादयन्ति च। कथं चातद्विषयाभ्याम् आगमपरार्थानुमानाभ्यां सोऽर्थ उपदिश्यत उपपाद्यते च। तस्माद् आगमानुमाने तद्विषये ते च विकल्पाव् इति परम् अपि प्रत्यक्षं विकल्प एवेत्य् अत आह --- तच् च श्रुतेति। यदि हि सवितर्कम् इव श्रुतानुमानसहभूतं तदनुषक्तं स्याद् भवेत् संकीर्णं तयोस् तु बीजम् एवैतत् ततो हि श्रुतानुमाने प्रभवतः। न च यद् यस्य कारणं तत् तद्विषयं भवति। न हि धूमज्ञानं वह्निज्ञानकारणम् इति वह्निविषयम्। तस्माद् अविकल्पेन प्रत्यक्षेण गृहीत्वा विकल्प्योपदिशन्ति चोपपादयन्ति च। उपसंहरति --- तस्माद् इति। व्याख्येयं सूत्रं योजयति --- निर्वितर्काया इति। स्मृतिपरिशुद्धाव् इत्यादि सूत्रम्। शब्दसंकेतश् च श्रुतं चानुमानं च तेषां ज्ञानम् एव विकल्पस् तस्मात् स्मृतिस् तस्याः परिशुद्धिर् अपगमस् तस्याम्। तत्र च संकेतस्मृतिपरिशुद्धिर् हेतुः। श्रुतानुमानस्मृतिपरिशुद्धिश् च हेतुमती। अनुमानशब्दश् च कर्मसाधनोऽनुमेयवाच्अकः। स्वम् इवेतीवकारो भिन्नक्रमस् त्यक्त्वेतिपदानन्तरं द्रष्टव्यः। विषयविप्रतिपत्तिं निराकरोति --- तस्या एकेति। एकां बुद्धिम् उपक्रमत आरभत इत्य् एकबुद्ध्युपक्रमः। तद् अनेन परमाणवो नानात्मानो न निर्वितर्कविषया इत्य् उक्तं भवति। योग्यत्वेऽपि तेषां परमसूक्ष्माणां नानाभूतानां महत्त्वैकार्थसमवेतैकत्वनिर्भासप्रत्ययविषयत्वायोगात्। अस्तु तर्हि परमार्थसत्सु परमाणुषु सांवृतः प्रतिभासधर्मः स्थौल्यम् इत्य् अत आह --- अर्थात्मेति। नासति बाधके स्थूलम् अनुभवसिद्धं शक्यापह्नवम् इति भावः। तत्र ये पश्यन्ति द्व्यणुकादिक्रमेण गोघटादय उपजायन्त इति तान् प्रत्याह --- अणुप्रचयेति। अणूनां प्रचयः स्थूलरूपपरिणामः, स च विशिष्यतेऽन्यस्मात् परिणामान्तरात् स एवात्मा स्वरूपं यस्य स तथोक्तः। गवादिर् भोगायतनम्। घटादिर् विषयः। तच् चैतद् उभयम् अपि लोक्यत इति लोकः। नन्व् एष भूतसूक्ष्मेभ्यो भिन्नोऽभिन्नो वा स्याद् भिन्नश् चेत् कथं तदाश्रयः कथं च तदाकारः। न हि घटः पटाद् अन्यस् तदाकारस् तदाश्रयो वा। अभिन्नश् चेत् तद्वद् एव सूक्ष्मोऽसाधारणश् च स्याद् अत आह --- स चेति। अयम् अभिप्रायः --- नैकान्ततः परमाणुभ्यो भिन्नो घटादिर् अभिन्नो वा, भिन्नत्वे गवाश्ववद् धर्मधर्मिभावानुपपत्तेः। अभिन्नत्वे धर्मिरूपवद् एव तदनुपपत्तेः। तस्मात् कथंचिद् भिन्नः कथंचिद् अभिन्नश् चास्थेयस् तथा च सर्वम् उपपद्यते। भूतसूक्ष्माणाम् इति षष्ठ्या कथंचिद् भेदं सूचयति आत्मभूत इति चाभेदम्। फलेन व्यक्तेन तदनुभवलक्षणेन तद्व्यवहारलक्षणेन च व्यक्तेन विप्रतिपन्नं प्रत्यनुमापितः। कारणाभेदे च कारणाकारतोपपन्नेत्य् आह --- स्वव्यञ्जकाञ्जन इति। स किं तदात्मभूतो धर्मो नित्यो नेत्य् आह --- धर्मान्तरस्य कपालादेर् उदय इति। तस्यावयविनः परमाणुभ्यो व्यावृत्तं रूपम् आदर्शयति --- स एष इति। परमाणुसाध्यायाः क्रियाया अन्या क्रिया मधूदकादिधारणलक्षणा तद्धर्मक इति। न केवलम् अनुभवाद् अपि तु व्यवहारतोऽपि तन्निबन्धनत्वाल् लोकयात्राया इत्य् आह --- तेनेति। स्याद् एतद् असति बाधकेऽनुभवो ऽवयविनं व्यवस्थापयेत्। अस्ति च बाधकं यत् सत् तत् सर्वम् अनवयवं यथा विज्ञानम्। सच् च गोघटादीति स्वभावहेतुः। सत्त्वं हि विरुद्धधर्मसंसर्गरहितत्वेन व्याप्तं, तद्विरुद्धश् च विरुद्धधर्मसंसर्गः सावयव उपलभ्यमानो व्यापकविरुद्धोपलब्ध्या सत्त्वम् अपि निवर्तयति। अस्ति चावयविनि तद्देशत्वातद्देशत्वावृतत्वानावृतत्वरक्तत्वारक्तत्वचलत्वाचलत्वलक्षणो विरुद्धधर्मसंसर्ग इत्य् अत आह --- यस्य पुनर् इति। अयम् अभिप्रायः --- अनुभवसिद्धं सत्त्वं हेतुः क्रियते यत् किल पांशुलपादुको हालिकोऽपि प्रतिपद्यते। अन्यद् वानुभवसिद्धात्। तत्रान्यद् असिद्धत्वाद् अहेतुः। अनुभवसिद्धं तु घटादीनां सत्त्वम् अर्थक्रियाकारित्वरूपं न स्थूलाद् अन्यत्। सोऽयं हेतुः स्थूलत्वम् अपाकुर्वन्न् आत्मानम् एव व्याहन्ति। ननु न स्थूलत्वम् एव सत्त्वम् अपि त्व् असतो व्यावृत्तिः। अस्थौल्यव्यावृत्तिश् च स्थौल्यं, व्यावर्त्यभेदाच् च व्यावृत्तयो भिद्यन्ते। अतः स्थौल्याभावेऽपि न सत्त्वव्याहतिः। अन्यत्वात्। भवतु वा व्यावृत्तिभेदाद् अवसायविषयभेदः। यत्पूर्वकास् त्व् अवसायास् तस्यानुभवस्याविकल्पस्य प्रमाणस्य को विषय इति निरूपयतु भवान् रूपपरमाणवो निरन्तरोत्पादा अगृहीतपरमसूक्ष्मतत्त्वा इति चेत्, हन्तैते गन्धरसस्पर्शपरमाणुभिर् अन्तरिता न निरन्तराः। तस्माद् अन्तरालाग्रह एकघनवनप्रत्ययवत् परमाण्वालम्बनः सन्न् अयं विकल्पो मिथ्येति तत्प्रभवविकल्पा न पारम्पर्येणापि वस्तुप्रतिबद्धा इति कुतस् तदवसितस्य सत्त्वस्यानवयवत्वसाधकत्वम्। तस्माद् अविकल्पस्य प्रत्यक्षस्य प्रामाण्यम् इच्छता तदनुभूयमानस्थौल्यस्यैव सत्त्वम् अविकल्पावसेयम् अकामेनाप्य् अभ्युपेयम्। तथा च तद्बाधमानं सत्त्वम् आत्मानम् एवापबाधेत। परमसूक्ष्माः परमाणवो विजातीयपरमाण्वनन्तरिता अनुभवविषया इति व्याहतम् अङ्गीकरणम्। तद् इदम् उक्तं --- यस्य पुनर् अवस्तुकः स प्रचयविशेषो निर्विकल्पविषयः। सन्तु तर्हि सूक्ष्माः परमाणवो निर्विकल्पविषया इत्य् अत आह --- सूक्ष्मं च कारणम् अनुपलभ्यम् अविकल्पस्येति। तस्यावयव्यभावाद् धेतोर् अतद्रूपप्रतिष्ठं मिथ्याज्ञानम् इति लक्षणेन सर्वम् एवं (एव) प्राप्तं मिथ्याज्ञानं यत् स्थौल्यालम्बनं यच् च तदधिष्ठानसत्त्वालम्बनम् इत्य् अर्थः। नन्व् एतावतापि न ज्ञानम् आत्मनि मिथ्या भवति तस्यावयवित्वेनाप्रकाशाद् इत्य् अत आह --- प्रायेणेति। ननु किम् एतावतापीत्य् अत आह --- तदा चेति। सत्त्वादिज्ञानं चेन् मिथ्या तदा सत्त्वादिहेतुकम् अनवयवित्वादिज्ञानम् अपि मिथ्यैव तस्यापि हि निर्विकल्पगोचरस्थूलम् एवावसेयतया विषयः, स च नास्तीति तात्पर्यार्थः। विषयाभाव एव कुत इत्य् अत आह --- यद् यद् इति। विरोधश् च परिणामवैचित्र्येण भेदाभेदेन चोक्तोपपत्त्यनुसारेणोद्धर्तव्य इति सर्वं रमणीयम्॥1.43॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता॥1.44॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता। अभिव्यक्तो घटादिर् धर्मो यैस् ते तथोक्ताः। घटादिधर्मोपगृहीता इति यावत्। देश उपर्यधःपार्श्वादिः। कालो वर्तमानः। निमित्तं पार्थिवस्य परमाणोर् गन्धतन्मात्रप्रधानेभ्यः पञ्चतन्मात्रेभ्य उत्पत्तिः। एवम् आप्यस्य परमाणोर् गन्धतन्मात्रवर्जितेभ्यो रसतन्मात्रप्रधानेभ्यश् चतुर्भ्यः। एवं तैजसस्य गन्धरसतन्मात्ररहितेभ्यो रूपतन्मात्रप्रधानेभ्यस् त्रिभ्यः। एवं वायवीयस्य गन्धादितन्मात्ररहिताभ्यां स्पर्शप्रधानाभ्यां स्पर्शशब्दतन्मात्राभ्याम्। एवं नाभसस्य शब्दणाम् (शब्दतन्मात्राद् एवैकस्मात्। तद् इदं निमित्तं भूतसूक्ष्माणाम्।) एतेषां देशकालनिमित्तानाम् अनुभवः, तेनावच्छिन्नेषु नाननुभूतविशेषणा विशेष्ये बुद्धिर् उपजायत इत्य् अर्थः। ननु सवितर्कया सह किं सारूप्यं सविचाराया इत्य् अत आह --- तन् नापीति। पार्थिवो हि परमाणुः पञ्चतन्मात्रप्रचयात्मैकबुद्धिनिर्ग्राह्यः। एवम् आप्यादयोऽपि चतुस्त्रिद्व्येकतन्मात्रात्मान एकबुद्धिनिर्ग्राह्या वेद्व्यतव्याः (वेदितव्याः)। उदितो वर्तमानो धर्मस् तेन विशिष्टम्। एतावता चात्र संकेतस्मृत्यागमानुमानविकल्पानुवेधः सूचितः। न हि प्रत्यक्षेण स्थूले दृश्यमाने परमाणवः प्रकाशन्ते। अपि त्व् आगमानुमानाभ्याम्। तस्माद् उपपन्नम् अस्याः संकीर्णत्वम् इति। निर्विचाराम् आह --- या पुनर् इति। सर्वथा सर्वेण नीलपीतादिना प्रकारेण। सर्वत इति सार्वविभक्तिकस् तसिः। सर्वैर् देशकालनिमित्तानुभवैर् इत्य् अर्थः। तद् अनेन स्वरूपेण कालानवच्छेदः परमाणूनाम् इति दर्शितम्। नापि तदारब्धधर्मद्वारेणेत्य् आह --- शान्ता अतीता उदिता वर्तमाना अव्यपदेश्या भविष्यन्तो धर्मास् तैर् अनवच्छिन्नेषु। अनवच्छिन्ना धर्मैः परमाणवः किम् असंबद्धा एव तैर् इत्य् अत आह --- सर्वधर्मानुपातिष्व् इति। कतमेन संबन्धेन धर्मान् अनुपतन्ति परमाणव इत्य् अत आह --- सर्वधर्मात्मकेषु। कथंचिद् भेदः कथंचिद् अभेदो धर्माणां परमाणुभ्य इत्य् अर्थः। कस्मात् पुनर् इयं समापत्तिर् एतद्विषयेत्य् अत आह --- एवंस्वरूपं हीति। वस्तुतत्त्वग्राहिणी नातत्त्वे प्रवर्तत इत्य् अर्थः। विषयम् अभिधायास्याः स्वरूपम् आह --- प्रज्ञा चेति। संकलय्य स्वरूपभेदोपयोगिविषयम् आह --- तत्रेति। उपसंहरति --- एवम् इति। उभयोर् आत्मनश् च निर्विचारायाश् चेति॥1.44॥

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्॥1.45॥

किं भूतसूक्ष्म एव ग्राह्यविषया समापत्तिः समाप्यते। न। किं तु --- सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्। पार्थिवस्य परमाणोः संबन्धिनी या गन्धतन्मात्रता सा समापत्तेः सूक्ष्मो विषयः। एवम् उत्तरत्रापि योज्यम्। लिङ्गमात्रं महत्तत्वं तद् धि लयं गच्छति प्रधान इति। अलिङ्गं प्रधानं तद् धि न क्वचिल् लयं गच्छतीत्य् अर्थः। अलिङ्गपर्यवसानत्वम् आह --- न चालिङ्गात् परम् इति। चोदयति --- ननु पुरुषोऽपि सूक्ष्मो नालिङ्गम् एवेत्य् अर्थः। परिहरति --- सत्यम् इति। उपादानतया सौक्ष्म्यम् अलिङ्ग एव नान्यत्रेत्य् अर्थः। तत्र पुरुषार्थनिमित्तत्वान् महदहंकारादेः पुरुषोऽपि कारणम् अलिङ्गवद् इति। कुत एवंलक्षणम् अलिङ्गस्यैव सौक्ष्म्यम् इत्य् आशयवान् पृच्छति --- किं त्व् इति। उत्तरम् आह --- लिङ्गस्येति। सत्यं कारणं न तूपादानम्। यथा हि प्रधानं महदादिभावेन परिणमते न तथा पुरुषस् तद्धेतुर् अपीत्य् अर्थः। उपसंहरति --- अतः प्रधान एव सौक्ष्म्यं निरतिशयं व्याख्यातम्॥1.45॥

ता एव सबीजः समाधिः॥1.46॥

चतसृणाम् अपि समापत्तीनां ग्राह्यविषयाणां संप्रज्ञातत्वम् आह --- ता एव सबीजः समाधिः। एवकारो भिन्नक्रमः सबीज इत्य् अस्यानन्तरं द्रष्टव्यः। ततश् चतस्रः समापत्तयो ग्राह्यविषयाः सबीजतया नियम्यन्ते। सबीजता त्व् अनियता ग्रहीतृग्रहणगोचरायाम् अपि समापत्तौ विकल्पाविकल्पभेदेनानिषिद्धा व्यवतिष्ठते। तेन ग्राह्ये चतस्रः समापत्तयो ग्रहीतृग्रहणयोश् चतस्र इत्य् अष्टौ सिद्धा भवन्तीति। निगदव्याख्यातं भाष्यम्॥1.46॥

निर्विचारवैशारद्येऽध्यात्मप्रसादः॥1.47॥

चतसृष्व् अपि समापत्तिषु ग्राह्यविषयासु निर्विचारायाः शोभनत्वम् आह --- निर्विचारवैशारद्येऽध्यात्मप्रसादः। वैशारद्यपदार्थम् आह --- अशुद्धीति। रजस्तमसोर् उपचयो ऽशुद्धिः सैवावरणलक्षणो मलस् तस्माद् अपेतस्य प्रकाशात्मनः प्रकाशस्वभावस्य बुद्धिसत्त्वस्यात एवानभिभूत इति। स्याद् एतद् ग्राह्यविषया चेत् समापत्तिः कथम् आत्मविषयः प्रसाद इत्य् अत आह --- भूतार्थविषय इति। नात्मविषयः किं तु तदाधार इत्य् अर्थः। क्रमाननुरोधी युगपद् इत्य् अर्थः। अत्रैव पारमर्षी गाथाम् उदाहरति --- तथा चेति। ज्ञानालोकप्रकर्षेणात्मानं सर्वेषाम् उपरि पश्यन् दुःखत्रयपरीतात् शोचतो जनात्र् जानाति॥1.47॥

ऋतंभरा तत्र प्रज्ञा॥1.48॥

अत्रैव योगिजनप्रसिद्धान्वर्थसंज्ञाकथनेन योगिसंमतिम् आह --- ऋतंभरा तत्र प्रज्ञा। सुगमं भाष्यम्। आगमेनेति वेदविहितं श्रवणम् उक्तम्। अनुमानेनेति मननम्। ध्यानं चिन्ता। तत्राभ्यासः पौनःपुन्येनानुष्ठानम्। तस्मिन् रस आदरः। तद् अनेन निदिध्यासनम् उक्तम्॥1.48॥

श्रुतानुमानप्रज्ञाभ्याम् अन्यविषया विशेषार्थत्वात्॥1.49॥

स्याद् एतत्। आगमानुमानगृहीतार्थविषया भावना प्रकर्षलब्धजन्मा निर्विचारागमानुमानविषयम् एव गोचरयेत्। न खल्व् अन्यविषयानुभवजन्मा संस्कारः शक्तोऽन्यत्र ज्ञानं जनयितुम् अतिप्रसङ्गात्। तस्मान् निर्विचारा चेद् ऋतंभरागमानुमानयोर् अपि तत्प्रसङ्ग इत्य् अत आह --- श्रुतानुमानेत्यादि। बुद्धिसत्त्वं हि प्रकाशस्वभावं सर्वार्थदर्शनसमर्थम् अपि तमसावृतं यत्रैव रजसोद्घाट्यते तत्रैव गृह्णाति। यदा त्व् अभ्यासवैराग्याभ्याम् अपास्तरजस्तमोमलम् अनवद्यवैशारद्यम् उद्योतते तदास्यातिपतितसमस्तमानमेयसीम्नः प्रकाशानन्त्ये सति किं नाम यन् न गोचर इति भावः। व्याचष्टे --- श्रुतम् आगम[वि]ज्ञानं (आगमविज्ञानं) तत्सामान्यविषयम्। कस्मात्। न ह्य् आगमेन शक्यो विशेषोऽभिधातुम्। कुतो यस्माद् आनन्त्याद् व्यभिचाराच् च न विशेषेण कृतसंकेतः शब्दः। यस्माद् अस्य विशेषेण सह वाच्यवाचकसंबन्धः प्रतीयेत। न च वाक्यार्थोऽपीदृशो विशेषः संभवति। अनुमानेऽपि लिङ्गलिङ्गिसंबन्धग्रहणाधीनजन्मनि गतिर् एषैवेत्य् आह --- तथानुमानम् इति। यत्र प्राप्तिर् इत्य् अत्र यत्रतत्रशब्दयोः स्थानपरिवर्तनेन व्याप्यव्यापकभावो ऽवगमयितव्यः। अतोऽत्रानुमानेन सामान्येनोपसंहारः। उपसंहरति --- तस्माद् इति। अस्तु तर्हि संबन्धग्रहानपेक्षं लोकप्रत्यक्षं न तत्सामान्यविषयम् इत्य् अत आह --- न चास्येत्यादि। मा भूत् संबन्धग्रहाधीनं लोकप्रत्यक्षम्। इन्द्रियाधीनं तु भवत्य् एव। न चेन्द्रियाणाम् अस्मिन्न् अस्ति योग्यतेत्य् अर्थः। ननु च यद्य् आगमानुमानप्रत्यक्षागोचरो विशेषस् तर्हि नास्ति प्रमाणविरहाद् इत्य् अत आह --- न चेति। न हि प्रमाणं व्यापकं कारणं वा प्रमेयस्य येन तन्निवृत्तौ निवर्तेत। नो खलु कलावतश् चन्द्रस्य परभागवर्तिहरिणसद्भावं प्रति न संदिहते प्रामाणिका इत्य् अर्थः। इति तस्मात् समाधिप्रज्ञानिर्ग्राह्य एवेति। अत्र च विवादाध्यासिताः परमाणव आत्मानश् च प्रातिस्विकविशेषशालिनो द्रव्यत्वे सति परस्परं व्यावर्तमानत्वाद् ये द्रव्यत्वे सति परस्परं व्यावर्तन्ते ते प्रातिस्विकविशेषशालिनो यथा खण्डमुण्डादय इत्य् अनुमानेनागमेन च ऋतंभरप्रज्ञोपदेशपरेण यद्य् अपि विशेषो निरूप्यते तदनिरूपणे संशयः स्यान् न्यायप्राप्तत्वात् तथाप्य् अदूरविप्रकर्षेण तत्सत्त्वं कथंचिद् गोचरयतः श्रुतानुमाने न तु साक्षाच् चार्थम् इव सम्उच्चयादिपदानि लिङ्गसंख्यायोगितया। तस्मात् सिद्धं श्रुतानुमानप्रज्ञाभ्याम् अन्यविषयेति॥1.49॥

तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी॥1.50॥

स्याद् एतत्। भवतु परमार्थविषयः संप्रज्ञातो यथोक्तोपायाभ्यासाद् अनादिना तु व्युत्थानसंस्कारेण निरूढनिबिडतया प्रतिबन्धनीया समाधिप्रज्ञा सा वात्यावर्तमध्यवर्तिप्रदीपपरमाणुर् इवेति शङ्काम् अपनेतुं सूत्रम् अवतारयति --- समाधिप्रज्ञेति। सूत्रं पठति --- तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी। तद् इति निर्विचारां समापत्तिं परामृशति। अन्येति व्युत्थानम् आह। भूतार्थपक्षपातो हि धियां स्वभावस् तावद् एवेयम् अनवस्थिता भ्राम्यति न यावत् तत्त्वं प्रतिलभते। तत्प्रतिलम्भे तत्र स्थितपदा सती संस्कारबुद्धिः संस्कारबुद्धिचक्रक्रमेणावर्तमानानादिम् अप्य् अतत्त्वसंस्कारबुद्धिक्रमं बाधत एवेति। तथा च बाह्या अप्य् आहुः ---

"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः। न बाधोऽनादिमत्त्वे ऽपि बुद्धेस् तत्पक्षपाततः" इति॥

स्याद् एतत् समाधिप्रज्ञातोऽस्तु व्युत्थानजस्य संस्कारस्य निरोधः। समाधिजस् तु संस्कारातिशयः समाधिप्रज्ञाप्रसवहेतुर् अस्त्य् अविकल इति तदवस्थैव चित्तस्य साधिकारतेति चोदयति --- कथम् असाव् इति। परिहरति --- न त इति। चित्तस्य हि कार्यद्वयं शब्दाद्युपभोगो विवेकख्यातिश् चेति। तत्र क्लेशकर्माशयसहितं शब्दाद्युपभोगे वर्तते। प्रज्ञाप्रभवसंस्कारोन्मूलितनिखिलक्लेशकर्माशयस्य तु चेतसोऽवसितप्रायाधिकारभावस्य विवेकख्यातिमात्रम् अवशिष्यते कार्यम्। तस्मात् समाधिसंस्काराश् चित्तस्य न भोगाधिकारहेतवः प्रत्युत तत्परिपन्थिन इति। स्वकार्याद् भोगलक्षणाद् अवसादयन्ति असमर्थं कुर्वन्तीत्य् अर्थः। कस्मात् ख्यातिपर्यवसानं हि चित्तचेष्टितं, तावद् विभोगाय (धि भोगाय) चित्तं चेष्टते न यावद् विवेकख्यातिम् अनुभवति। संजातविवेकख्यातिनस् तु क्लेशनिवृत्तौ न भोगाधिकार इत्य् अर्थः॥1.50॥

तस्यापि निरोधे सर्वनिरोधान् निर्बीजः समाधिः॥1.51॥

(इति श्रीपतञ्जलिविरचितयोगसूत्रेषु प्रथमः समाधिपादः॥1॥)

तद् अत्र भोगाधिकारप्रशान्तिः प्रयोजनं प्रज्ञासंस्काराणाम् इत्य् उक्तम्। पृच्छति --- किं चेति। किं चास्य भवति प्रज्ञासंस्कारवच् चित्तं प्रज्ञासंस्कारप्रवाहजनकतया तथैव साधिकारम् इत्य् अधिकारापनुत्तयेऽन्यद् अपि किंचिद् अपेक्षणीयम् अस्तीत्य् अर्थः। सूत्रेणोत्तरम् आह --- तस्यापि निरोधे सर्वनिरोधान् निर्बीजः समाधिः। परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन संस्कारोपजननद्वारा तस्यापि प्रज्ञाकृतसंस्कारस्य निरोधे, न केवलं प्रज्ञाया इत्य् अपिशब्दार्थः। सर्वस्योत्पद्यमानस्य संस्कारप्रज्ञाप्रवाहस्य निरोधात् कारणाभावेन कार्यानुत्पादात् सोऽयं निर्बीजः समाधिर् भवति। व्याचष्टे --- स निर्बीजः समाधिः समाधिप्रज्ञाविरोधिनः परस्माद् वैराग्याद् उपजायमानः स्वकारणद्वारेण न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानाम् अप्य् असौ संस्काराणां परिपन्थी भवति। ननु वैराग्यजं विज्ञानं सद्विज्ञानं प्रज्ञामात्रं बाधतां संस्कारं त्व् अविज्ञानरूपं कथं बाधते। दृष्टा हि जाग्रतोऽपि स्वप्नदृष्टार्थस्मृतिर् इत्य् आशयवान् पृच्छति --- कस्माद् इति। उत्तरं --- निरोधज इति। निरुध्यतेऽनेन प्रज्ञेति निरोधः परं वैराग्यम्। ततो जातो निरोधजः संस्कारः। संस्काराद् एव दीर्घकालनैरन्तर्यसत्कारासेवितपरवैराग्यजन्मनः प्रज्ञासंस्कारबाधो न तु विज्ञानाद् इत्य् अर्थः। स्याद् एतत्। निरोधजसंस्कारसद्भावे किं प्रमाणं स हि प्रत्यक्षेण वानुभूयेत स्मृत्या वा

कार्येणानुमीयेत। न च सर्ववृत्तिनिरोधे प्रत्यक्षम् अस्ति योगिनः। नापि स्मृतिः। तस्य वृत्तिमात्रनिरोधतया स्मृतिजनकत्वासंभवाद् इत्य् अत आह --- निरोधेति। निरोधे स्थितिश् चित्तस्य निरुद्धावस्थेत्य् अर्थः। तस्याः कालक्रमो मुहूर्तार्धयामयामाहोरात्रादिस् तदनुभवेन। एतद् उक्तं भवति --- वैराग्याभ्यासप्रकर्षानुरोधी निरोधप्रकर्षो मुहूर्तार्धयामादिव्यापितयानुभूयते योगिना। न च वैराग्यक्षणाः क्रमनियततया परस्परम् असंभवन्तस् तत्तत्कालव्यापितया सातिशयं निरोधं कर्तुम् ईशत इति तत्तद्वैराग्यक्षणप्रचयजन्यः स्थायी संस्कारप्रचय एषितव्य इति भावः। ननूच्छिद्यन्तां प्रज्ञासंस्काराः। निरोधसंस्कारास् तु कुतः समुच्छिद्यन्ते। अनुच्छेदे वा साधिकारत्वम् एवेत्य् अत आह --- व्युत्थानेति। व्युत्थानं च तस्य निरोधसमाधिश् च संप्रज्ञातस् तत्प्रभवाः संस्काराः कैवल्यभागीया निरोधजाः संस्कारा इत्य् अर्थः। व्युत्थानप्रज्ञासंस्काराश् चित्ते प्रलीना इति भवति चित्तं व्युत्थानप्रज्ञासंस्कारवत्। निरोधसंस्कारस् तु प्रत्युदित एवास्ते चित्ते। निरोधसंस्कारे सत्य् अपि चित्तम् अनधिकारवत्। पुरुषार्थजनकं चित्तं हि साधिकारं शब्दाद्युपभोगविवेकख्याती च तथा पुरुषार्थः। संस्कारशेषतायां तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्थः। विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं चित्तम्। अपि तु क्लेशवासिततयेत्य् आशयवान् आह --- यस्माद् इति। शेषं सुगमम्॥1.51॥

योगस्योद्देशनिर्देशौ तदर्थं वृत्तिलक्षणम्। योगोपायाः प्रभेदाश् च पादेऽस्मिन्न् उपवर्णिताः॥1॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलयोगसूत्रभाष्यव्याख्यायां प्रथमः समाधिपादः॥1॥

# तत्त्ववैशारद्यां साधनपादः

https://sa.wikisource.org/s/9tx

**तत्त्ववैशारदी**

तत्र द्वितीयः साधनपादः।

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः॥2.1॥

ननु प्रथमपादेनैव सोपायः सावान्तरप्रभेदः सफलो योग उक्तस् तत् किम् अपरम् अवशिष्यते यदर्थं द्वितीयः पादः प्रारभ्येतेत्य् अत आह --- उद्दिष्ट इति। अभ्यासवैराग्ये हि योगोपायौ प्रथमे पाद उक्तौ। न च तौ व्युत्थितचित्तस्य द्राग् इत्य् एव संभवत इति द्वितीयपादोपदेश्यान् उपायान् अपेक्षते सत्त्वशुद्ध्यर्थम्। ततो हि विशुद्धसत्त्वः कृतरक्षासंविधानोऽभ्यासवैराग्ये प्रत्यहं भावयति। समाहितत्वम् अविक्षिप्तत्वम्। कथं व्युत्थानचित्तोऽप्य् उपदेक्ष्यमाणैर् उपायैर् युक्तः सन् योगी स्याद् इत्य् अर्थः। तत्र वक्ष्यमाणेषु नियमेष्व् आकृष्य प्राथमिकं प्रत्युपयुक्ततरतया प्रथमतः क्रियायोगम् उपदिशति सूत्रकारः --- तपःस्वाध्यायेत्यादि। क्रियैव योगः क्रियायोगो योगसाधनत्वात्। अत एव विष्णुपुराणे खाण्डिक्यकेशिध्वजसंवादे ---

"योगयुक् प्रथमं योगी युञ्जमानोऽभिधीयते" [विष्णुपुराणम् 6.7.33]

इत्य् उपक्रम्य तपःस्वाध्यायादयो दर्शिताः। व्यतिरेकमुखेन (व्यतिरेकमुखेण) तपस उपायत्वम् आह --- नातपस्विन इति। तपसोऽवान्तरव्यापारम् उपायतोपयोगिनं दर्शयति --- अनादीति। अनादिभ्यां कर्मक्लेशवासनाभ्यां चित्रात एव प्रत्युपस्थितम् उपनतं विषयजालं यस्यां सा तथोक्ता। अशुद्धी रजस्तमःसमुद्रेको नान्तरेण तपः संभेदम् आपद्यते। सान्द्रस्य नितान्तविरलता संभेदः। ननूपादीयमानम् अपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष इति कथं तदुपाय इत्य् अत आह --- तच् चेति। तावन्मात्रम् एव तपश् चरणीयं न यावता धातुवैषम्यम् आपद्यत इत्य् अर्थः। प्रणवादयः पुरुषसूक्तरुद्रमण्डलब्राह्मणादयो वैदिकाः, पौराणिकाश् च ब्रह्मपारायणादयः। परमगुरुर् भगवान् ईश्वरस् तस्मिन्। यत्रेदम् उक्तम् ---

"कामतोऽकामतो वापि यत् करोमि शुभाशुभम्। तत् सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्य् अहम्" इति।

तत्फलसंन्यासो वा फलानभिसंधानेन कार्यकरणम्। यत्रेदम् उक्तम् ---

"कर्मण्य् एवाधिकारस् ते मा फलेषु कदाचन। मा कर्मफलहेतुर् भूर् मा ते सङ्गोऽस्त्व् अकर्मणि" [भगवद्गीता 2.47] ॥2.1॥

समाधिभावनार्थः क्लेशतनूकरणार्थश् च॥2.2॥

तस्य प्रयोजनाभिधानाय सूत्रम् अवतारयति --- स हीति। सूत्रं --- समाधिभावनार्थः क्लेशतनूकरणार्थश् च। ननु क्रियायोग एव चेत् क्लेशान् प्रतनूकरोति कृतं तर्हि प्रसंख्यानेनेत्य् अत आह --- प्रतनूकृतान् इति। क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो न तु वन्ध्यत्वे क्लेशानां प्रसंख्यानस्य तु तद्वन्ध्यत्वे। दग्धबीजकल्पान् इति वन्ध्यत्वेन दग्धकलमबीजसारूप्यम् उक्तम्। स्याद् एतत्। प्रसंख्यानम् एव चेत् क्लेशान् अप्रसवधर्मिणः करिष्यति, कृतम् एषां प्रतनूकरणेनेत्य् अत आह --- तेषाम् इति। क्लेशानाम् अतानवे हि बलवद्विरोधिग्रस्ता सत्त्वपुरुषान्यताख्यातिर् उदेतुम् एव नोत्सहते। प्राग् एव तद्वन्ध्यभावं कर्तुं प्रविरलीकृतेषु तु क्लेशेषु दुर्बलेषु तद्विरोधिन्य् अपि वैराग्याभ्यासाभ्याम् उपजायते। उपजाता च तैर् अपरामृष्टानभिभूता नैव यावत् परामृश्यत इति। सत्त्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञातीन्द्रियतया सूक्ष्मोऽस्या विषय इति सूक्ष्मा प्रज्ञा प्रतिप्रसवाय प्रविलयाय कल्पिष्यते। कुतः, समाप्ताधिकारा यतः समाप्तोऽधिकारः कार्यारम्भणं गुणानां यया हेतुभूतया सा तथोक्तेति॥2.2॥

अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः॥2.3॥

पृच्छति --- अथेति। अविद्येति सूत्रेण परिहारः। अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः। व्याचष्टे --- पञ्च विपर्यया इति। अविद्या तावद् विपर्यय एव। अस्मितादयो ऽप्य् अविद्योपादानास् तदविनिर्भागवर्तिन इति विपर्ययाः। ततश् चाविद्यासमुच्छेदे तेषाम् अपि समुच्छेदो युक्त इति भावः। तेषाम् उच्छेत्तव्यताहेतुं संसारकारणत्वम् आह --- ते स्पन्दमानाः समुदाचरन्तो गुणानाम् अधिकारं द्रढयन्ति बलवन्तं कुर्वन्त्य् अत एव परिणामम् अवस्थापयन्ति अव्यक्तमहदहंकारपरम्परया हि कार्यकारणस्रोत उन्नमयन्त्य् उद्भावयन्ति। यदर्थं सर्वम् एतत् कुर्वन्ति तद् दर्शयति --- परस्परेति। कर्मणां विपाको जात्यायुर्भोगलक्षणः पुरुषार्थस् तम् अमी क्लेशा अभिनिर्हरन्ति निष्पादयन्ति। किं प्रत्येकं नेत्य् आह ---

परस्परानुग्रहेति। कर्मभिः क्लेशाः क्लेशैश् च कर्माणीति॥2.3॥

अविद्या क्षेत्रम् उत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्॥2.4॥

हेयानां क्लेशानाम् अविद्यामूलत्वं दर्शयति --- अविद्या क्षेत्रम् उत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्। तत्र का प्रसुप्तिर् इति। स्वोचिताम् अर्थक्रियाम् अकुर्वतां क्लेशानां सद्भावे न प्रमाणम् अस्तीत्य् अभिप्रायः पृच्छतः। उत्तरं --- चेतसीति। मा नामार्थक्रियां कार्षुः क्लेशा विदेहप्रकृतिलयानां बीजभावं प्राप्तास् तु ते शक्तिमात्रेण सन्ति क्षीर इव दधि। न हि विवेकख्यातेर् अन्यद् अस्ति कारणं तद्वन्ध्यतायाम्। अतो विदेहप्रकृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न यावत् तदवधिकालं प्राप्नुवन्ति। तत्प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास् तेषु तेषु विषयेषु संमुखीभवन्ति। शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः। तद् अनेनोत्पत्तिशक्तिर् उक्ता। बीजभावोपगम इति च कार्यशक्तिर् इति। ननु विवेकख्यातिमतोऽपि क्लेशाः कस्मान् न प्रसुप्ता इत्य् अत आह --- प्रसंख्यानवत इति। चरमदेहो न तस्य देहान्तरम् उत्पत्स्यते यदपेक्षयास्य देहः पूर्व इत्य् अर्थः। नान्यत्र विदेहादिष्व् इत्य् अर्थः। ननु सतो नात्यन्तविनाश इति किम् इति तदीययोगर्द्धिबलेन विषयसंमुखीभावे न क्लेशाः प्रबुध्यन्त इत्य् अत आह --- सताम् इति। सन्तु क्लेशा दग्धस् त्व् एषां प्रसंख्यानाग्निना बीजभाव इत्य् अर्थः। क्लेशप्रतिपक्षः क्रियायोगस् तस्य भावनम् अनुष्ठानं तेनोपहतास् तनवः। अथवा सम्यग्ज्ञानम् अविद्यायाः प्रतिपक्षो भेददर्शनम् अस्मिताया माध्यस्थ्यं रागद्वेषयोर् अनुबन्धबुद्धिनिवृत्तिर् अभिनिवेशस्येति। विच्छित्तिम् आह --- तथेति। क्लेशानाम् अन्यतमेन समुदाचरताभिभवाद् वात्यन्तविषयसेवया वा विच्छिद्य विच्छिद्य तेन तेनात्मना समुदाचरन्त्य् आविर्भवन्ति वाजीकरणाद्युपयोगेन वाभिभावकदौर्बल्येन वेति। वीप्सया विच्छेदसमुदाचारयोः पौनःपुन्यं दर्शयता यथोक्तात् प्रसुप्ताद् भेद उक्तः। रागेण वा समुदाचरता विजातीयः क्रोधोऽभिभूयते सजातीयेन वा विषयान्तरवर्तिना रागेणैव विषयान्तरवर्ती रागोऽभिभूयत इत्य् आह --- रागेति। भविष्यद्वृत्तेस् त्रयी गतिर् यथायोगं वेदितव्येत्य् आह --- स हीति। भविष्यद्वृत्तिक्लेशमात्रपरामर्शि सर्वनाम न चैत्ररागपरामर्शि तस्य विच्छिन्नत्वाद् एवेति। उदारम् आह --- विषय इति। ननूदार एव पुरुषान् क्लिश्नातीति भवतु क्लेशोऽन्ये त्व् अक्लिश्नन्तः कथं क्लेशा इत्य् अत आह --- सर्व एवैत इति। क्लेशविषयत्वं क्लेशपदवाच्यत्वं नातिक्रामन्त्य् उदारताम् आपद्यमानाः। अत एव तेऽपि हेया इति भावः। क्लेशत्वेनैकतां मन्यमानश् चोदयति --- कस् तर्हीति। क्लेशत्वेन समानत्वेऽपि यथोक्तावस्थाभेदाद् विशेष इति परिहरति --- उच्यते सत्यम् इति। स्याद् एतत्। अविद्यातो भवन्तु क्लेशाः, तथाप्य् अविद्यानिवृत्तौ कस्मान् निवर्तन्ते। न खलु पटः कुविन्दनिवृत्तौ निवर्तत इत्य् अत आह --- सर्व एवेति। भेदा इव भेदास् तदविनिर्भागवर्तिन इति यावत्। पृच्छति --- कस्मात्। उत्तरं --- सर्वेष्व् इति। तद् एव स्फुटयति --- यद् इति। आकार्यते समारोप्यते। शेषं सुगमम्।

"प्रसुप्तास् तत्त्वलीनानां तन्ववस्थाश् च योगिनाम्। विच्छिन्नोदाररूपाश् च क्लेशा विषयसङ्गिनाम्" इति संग्रहः॥2.4॥

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिर् अविद्या॥2.5॥

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिर् अविद्या। अनित्यत्वोपयोगिविशेषणं --- कार्य इति। केचित् किल भूतानि नित्यत्वेनाभिमन्यमानास् तद्रूपम् अभीप्सवस् तान्य् एवोपासते। एवं धूमादिमार्गान् उपासते चन्द्रसूर्यतारकाद्युलोकान् नित्यान् अभिमन्यमानास् तत्प्राप्तये। एवं दिवौकसो देवान् अमृतान् अभिमन्यमानास् तभावाय सोमं पिबन्ति। आम्नायते हि --- "अपाम सोमम् अमृता अभूम" [तैत्तिरीयसंहिता 3.2.5.4] इति। सेयम् अनित्येषु नित्यख्यातिर् अविद्या। तथाशुचौ परमबीभत्से काये। अर्धोक्त एव कायबीभत्सतायां वैयासिकीं गाथां पठति --- स्थानाद् इति। मातुर् उदरं मूत्राद्युपहतं स्थानं, पित्रोर् लोहितरेतसी बीजम्। अशितपीताहाररसादिभाव उपष्टम्भस् तेन शरीरं धार्यते। निःस्यन्दः प्रस्वेदः। निधनं च श्रोत्रियशरीरम् अप्य् अपवित्रयति तत्स्पर्शे स्नानविधानात्। ननु यदि शरीरम् अशुचि कृतं तर्हि मृज्जलादिक्षालनेनेत्य् अत आह --- आधेयशौचत्वाद् इति। स्वभावेनाशुचेर् अपि शरीरस्य शौचम् आधेयं सुगन्धितेव कामिनीनाम् अङ्गरागादिभिः। अर्धोक्तं पूरयति --- इत्य् उक्तेभ्यो हेतुभ्योऽशुचौ शरीर इति। शुचिख्यातिम् आह --- नवेति। हावः शृङ्गारजा लीला। कस्य स्त्रीकायस्य परमबीभत्सस्य केन मन्दतमसादृश्येन शशाङ्कलेखादिना संबन्धः। एतेनाशुचौ स्त्रीकाये शुचिख्यातिप्रदर्शनेन। अपुण्ये हिंसादौ संसारमोचकादीनां पुण्यप्रत्ययः। एवम् अर्जनरक्षणादिदुःखबहुलतयानर्थे धनादाव् अर्थप्रत्यया व्याख्याताः सर्वेषां जुगुप्सितत्वेनाशुचित्वात्। तथा दुःख इति। सुगमम्। तथानात्मनीति। सुगमम्। तथैतद् अत्रोक्तं पञ्चशिखेन। व्यक्तं चेतनं पुत्रदारपश्वादि। अव्यक्तम् अचेतनं शय्यासनाशनादि। स सर्वोऽप्रतिबुद्धो मूढः। चत्वारि पदानि स्थानान्य् अस्या इति चतुष्पदा। नन्व् अन्यापि दिङ्मोहालातचक्रादिविषयानन्तपदाविद्या तत् किम् उच्यते चतुष्पदेत्य् अत आह --- मूलम् अस्येति। सन्तु नामान्या अप्य् अविद्याः संसारबीजं तु चतुष्पदैवेति। नन्व् अविद्येति नञ्समासः पूर्वपदार्थप्रधानो वा स्याद् यथामक्षिकम् इति। उत्तरपदार्थप्रधानो वा यथाराजपुरुष इति। अन्यपदार्थप्रधानो वा यथामक्षिको देश इति। तत्र पूर्वपदार्थप्रधानत्वे विद्यायाः प्रसज्यप्रतिषेधो गम्येत। न चास्याः क्लेशादिकारणत्वम्। उत्तरपदार्थप्रधानत्वे वा विद्यैव कस्यचिद् अभावेन विशिष्टा गम्येत। सा च क्लेशादिपरिपन्थिनी न तु तद्बीजम्। न हि प्रधानोपघाती प्रधानगुणो युक्तः। तदनुपघाताय गुणे त्व् अन्याय्यकल्पना। तस्माद् विद्यास्वरूपानुपघाताय नञोऽन्यथाकरणम् अप्य् आहारो वा निषेध्यस्येति। अन्यपदार्थप्रधानत्वे त्व् अविद्यमानविद्या बुद्धिर् वक्तव्या। न चासौ विद्याया अभावमात्रेण क्लेशादिबीजम्। विवेकख्यातिपूर्वकनिरोधसंपन्नाया अपि तथात्वप्रसङ्गात्। तस्मात् सर्वथैवाविद्याया न क्लेशादिमूलतेत्य् अत आह --- तस्याश् चेति। वस्तुनो भावो वस्तुसतत्त्वं वस्तुत्वम् इति यावत्। तद् अनेन न प्रसज्यप्रतिषेधः। नापि विद्यैवाविद्या, न तदभावविशिष्टा बुद्धिर् अपि तु विद्याविरुद्धं विपर्ययज्ञानम् अविद्येत्य् उक्तम्। लोकाधीनावधारणो हि शब्दार्थयोः संबन्धः। लोके चोत्तरपदार्थप्रधानस्यापि नञ उत्तरपदाभिधेयोपमर्दकस्य तल्लक्षिततद्विरुद्धपरतया तत्र

तत्रोपलब्धेर् इहापि तद्विरुद्धे वृत्तिर् इति भावः। दृष्टान्तं विभजते --- यथा नामित्र इति। न मित्राभावो नापि मित्रमात्रम् इत्य् अस्यानन्तरं वस्त्वन्तरं किं तु तद्विरुद्धः सपत्न इति वक्तव्यम्। तथागोष्पदम् इति न गोष्पदाभावो न गोष्पदमात्रं किं तु देश एव विपुलो गोष्पदविरुद्धस् ताभ्याम् अभावगोष्पदाभ्याम् अन्यद् वस्त्वन्तरम्। दार्ष्टान्तिके योजयति --- एवम् इति॥2.5॥

दृग्दर्शनशक्त्योर् एकात्मतेवास्मिता॥2.6॥

अविद्याम् उक्त्वा तस्याः कार्यम् अस्मितां रागादिवार्षिष्ठाम् आह --- दृग्दर्शनशक्त्योर् एकात्मतेवास्मिता। दृक् च दर्शनं च ते एव शक्ती तयोर् आत्मानात्मनोर् अनात्मन्य् आत्मज्ञानलक्षणाविद्यापादिता यैकात्मतेव न तु परमार्थत एकात्मता सास्मिता। दृग्दर्शनयोर् इति वक्तव्ये तयोर् भोक्तृभोग्ययोर् योग्यतालक्षणं संबन्धं दर्शयितुं शक्तिग्रहणम्। सूत्रं विवृणोति --- पुरुष इति। नन्व् अनयोर् अभेदप्रतीतेर् अभेद एव कस्मान् न भवति कुतश् चैकत्वं क्लिश्नाति पुरुषम् इत्य् अत आह --- भोक्तृभोग्येति। भोग्यशक्तिर् बुद्धिर् भोक्तृशक्तिः पुरुषस् तयोर् अत्यन्तविभक्तयोः कुतो ऽत्यन्तविभक्तत्वम् इत्य् अत आह --- अत्यन्तासंकीर्णयोः। अपरिणामित्वादिधर्मकः पुरुषः परिणामित्वादिधर्मिका बुद्धिर् इत्य् असंकीर्णता। तद् अनेन प्रतीयमानोऽप्य् अभेदो न पारमार्थिक इत्य् उक्तम्। अविभागेति क्लेशत्वम् उक्तम्। अन्वयं दर्शयित्वा व्यतिरेकम् आह --- स्वरूपेति। प्रतिलम्भो विवेकख्यातिः। परस्याप्य् एतत् संमतम् इत्य् आह --- तद् उक्तं (तथा चोक्तं) पञ्चशिखेन बुद्धित इति। आकारः स्वरूपं सदा विशुद्धिः, शीलम् अउदासीन्यं, विद्या चैतन्यं, बुद्धिर् अविशुद्धानुदासीना जडा चेति तत्रात्मबुद्धिर् अविद्या। मोहः पूर्वाविद्याजनितः संस्कारस् तमो वाविद्यायास् तामसत्वाद् इति॥2.6॥

सुखानुशयी रागः॥2.7॥

विवेकदर्शने रागादीनां विनिवृत्तेर् अविद्यापादितास्मिता रागादीनां निदानम् इत्य् अस्मितानन्तरं रागादींल् लक्षयति --- सुखानुशयी रागः। अनभिज्ञस्य स्मृतेर् अभावात् सुखाभिज्ञस्येत्य् उक्तम्। स्मर्यमाणे सुखे रागः सुखानुस्मृतिपूर्वकः। अनुभूयमाने तु सुखे नानुस्मृतिम् अपेक्षते। तत्साधने तु स्मर्यमाणे दृश्यमाने वा सुखानुस्मृतिपूर्व एव रागः। दृश्यमानम् अपि हि सुखसाधनं तज्जातीयस्य सुखहेतुतां स्मृत्वा तज्जातीयतया वास्य सुखहेतुत्वम् अनुमायेच्छति। अनुशयिपदार्थम् आह --- य इति॥2.7॥

दुःखानुशयी द्वेषः॥2.8॥

दुःखानुशयी द्वेषः। दुःखाभिज्ञस्येति पूर्ववद् व्याख्येयम्। अनुशयिपदार्थम् आह --- यः प्रतिघ इति। प्रतिहन्तीति प्रतिघः। एतद् एव पर्यायैर् विवृणोति --- मन्युर् इति॥2.8॥

स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः॥2.9॥

स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः। अभिनिवेशपदार्थं व्याचष्टे --- सर्वस्य पाणिन इति। इयम् आत्माशीर् आत्मनि प्रार्थना मा न भूवं माभावी भूवं भूयासं जीव्यासम् इति। न चाननुभूतमरणधर्मकस्य, अननुभूतो मरणधर्मो येन जन्तुना न तस्यैषा भवत्य् आत्माशीर् अभिनिवेशो मरणभयम्। प्रसङ्गतो जन्मान्तरं प्रत्याचक्षाणं नास्तिकं निराकरोति --- एतया चेति। प्रत्युदितस्य शरीरस्य ध्रियमाणत्वात् पूर्वजन्मानुभवः प्रतीयते। निकायविशिष्टाभिर् अपूर्वाभिर् देहेन्द्रियबुद्धिवेदनाभिर् अभिसंबन्धो जन्म तस्यानुभवः प्राप्तिः सा प्रतीयते कथम् इत्य् अत आह --- स चायम् अभिनिवेशः। अर्थोक्ताव् एवास्य क्लेशत्वम् आह --- क्लेश इति। अयम् अहितकर्मादिना जन्तून् क्लिश्नाति दुःखाकरोतीति क्लेशः। वक्तुम् उपक्रान्तं परिसमापयति --- स्वरसवाहीति। स्वभावेन वासनारूपेण वहनशीलो न पुनर् आगन्तुकः। कृमेर् अपि जातमात्रस्य दुःखबहुलस्य निकृष्टतमचैतन्यस्यानागन्तुकत्वे हेतुम् आह --- प्रत्यक्षानुमानागमैः प्रत्युदिते जन्मन्य् असंभावितो ऽसंपादितो मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखम् अनुमापयति। अयम् अभिसंधिः --- जातमात्र एव हि बालको मारकवस्तुदर्शनाद् वेपमानः कम्पविशेषाद् अनुमितमरणप्रत्यासत्तिस् ततो बिभ्यद् उपलभ्यते। दुःखाद् दुःखहेतोश् च भयं दृष्टम्। न चास्मिञ् जन्मन्य् अनेन मरणम् अनुभूतम् अनुमितं श्रुतं वा, प्राग् एवास्य दुःखत्वं तद्धेतुत्वं वावगम्येत, तस्मात् तस्य तथाभूतस्य स्मृतिः परिशिष्यते। न चेयं संस्काराद् ऋते। न चायं संस्कारोऽनुभवं विना। न चास्मिञ् जन्मन्य् अनुभव इति प्राग्भवीयः परिशिष्यत इत्य् आसीत् पूर्वजन्मसंबन्ध इति। तथापदं यथापदम् आकाङ्क्षतीत्य् अर्थप्राप्ते यथापदे सति यादृशो वाक्यार्थो भवति तादृशं दर्शयति --- यथा चायम् इति। अत्यन्तमूढेषु मन्दतमचैतन्येषु। विद्वत्तां दर्शयति --- विज्ञातपूर्वापरान्तस्य। अन्तः कोटिः। पुरुषस्य हि पूर्वा कोटिः संसार उत्तरा च कैवल्यं सैव विज्ञाता श्रुतानुमानाभ्यां येन स तथोक्तः। सोऽयं मरणत्रास आ कृमेर् आ च विदुषो रूढः प्रसिद्ध इति। नन्व् अविदुषो भवतु मरणत्रासो विदुषस् तु न संभवति विद्ययोन्मूलितत्वात्। अनुन्मूलने वा स्याद् अत्यन्तसत्त्वम् इत्य् आशयवान् पृच्छति --- कस्माद् इति। उत्तरम् आह --- समाना हीति। न संप्रज्ञातवान् विद्वान् अपि तु श्रुतानुमितविवेक इति भावः॥2.9॥

ते प्रतिप्रसवहेयाः सूक्ष्माः॥2.10॥

तद् एवं क्लेशा लक्षितास् तेषां च हेयानां प्रसुप्ततनुविच्छिन्नोदाररूपतया चतस्रोऽवस्था दर्शिताः। कस्मात् पुनः पञ्चमी क्लेशावस्था दग्धबीजभावतया सूक्ष्मा न सूत्रकारेण कथितेत्य् अत आह --- ते प्रतिप्रसवहेयाः सूक्ष्माः। यत् किल पुरुषप्रयत्नगोचरस् तद् उपदिश्यते। न च सूक्ष्मावस्थाहानं प्रयत्नगोचरः किं तु प्रतिप्रसवेन कार्यस्य चित्तस्यास्मितालक्षणकारणभावापत्त्या हातव्येति। व्याचष्टे --- त इति। सुगमम्॥ 2.10॥

ध्यानहेयास् तद्वृत्तयः॥2.11॥

अथ क्रियायोगतनूकृतानां क्लेशानां किंविषयात् पुरुषप्रयत्नाद् धानम् इत्य् अत आह --- स्थितानां तु बीजभावोपगतानाम् इति वन्ध्येभ्यो व्यवच्छिनत्ति। सूत्रं पठति --- ध्यानहेयास् तद्वृत्तयः। व्याचष्टे --- क्लेशानाम् इति। क्रियायोगतनूकृता अपि हि प्रतिप्रसवहेतुभावेन कार्यतः स्वरूपतश् च शक्या उच्छेत्तुम् इति स्थूला उक्ताः। पुरुषप्रयत्नस्य प्रसंख्यानगोचरस्यावधिम् आह --- यावद् इति। सूक्ष्मीकृता इति विवृणोति --- दग्धेति। अत्रैव दृष्टान्तम् आह --- यथा वस्त्राणाम् इति। यत्नेन क्षालनादिनोपायेन क्षारसंयोगादिना। स्थूलसूक्ष्ममात्रतया दृष्टान्तदार्ष्टान्तिकयोः साम्यं न पुनः प्रयत्नापनेयतया प्रतिप्रसवहेयेषु तदसंभवात्। स्वल्पः प्रतिपक्ष उच्छेदहेतुर् यासां तास् तथोक्ताः। महान् प्रतिपक्ष उच्छेदहेतुर् यासां तास् तथोक्ताः। प्रतिप्रसवस्य चाधस्तात् प्रसंख्यानम् इत्य् अवरतया स्वल्पत्वम् उक्तम्॥2.11॥

क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः॥2.12॥

स्याद् एतज् जात्यायुर्भोगहेतवः पुरुषं क्लिश्नन्तः क्लेशाः कर्माशयश् च तथा, न त्व् अविद्यादयस् तत् कथम् अविद्यादयः क्लेशा इत्य् अत आह --- क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः। क्लेशा मूलं यस्योत्पादे च कार्यकरणे च स तथोक्तः। एतद् उक्तं भवति --- अविद्यादिमूलो हि कर्माशयो जात्यायुर्भोगहेतुर् इत्य् अविद्यादयो ऽपि तद्धेतवोऽतः क्लेशा इति। व्याचष्टे --- तत्रेति। आशेरते सांसारिकाः पुरुषा अस्मिन्न् इत्य् आशयः कर्मणाम् आशयो धर्माधर्मौ। कामात् काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर् धर्मो भवति। एवं लोभात् परद्रव्यापहारादाव् अधर्मः। मोहाद् अधर्मे हिंसादौ धर्मबुद्धेः प्रवर्तमानस्याधर्म एव। न त्व् अस्ति मोहजो धर्मः। अस्ति क्रोधजो धर्मः। तद्यथा ध्रुवस्य जनकापमानजन्मनः क्रोधात् तज्जिगीषया चित्तेन कर्माशयेन पुण्येनान्तरिक्षलोकवासिनाम् उपरिस्थानम्। अधर्मस् तु क्रोधजो ब्रह्मवधादिजन्मा प्रसिद्ध एव भूतानाम्। तस्य द्वैविध्यम् आह --- स दृष्टजन्मेति। दृष्टजन्मवेदनीयम् आह --- तीव्रसंवेगेनेति। यथासंख्यं दृष्टान्ताव् आह --- यथा नन्दीश्वर इति। तत्र नारकाणाम् इति। येन कर्माशयेन कुम्भीपाकादयो नरकभेदाः प्राप्यन्ते तत्कारिणो नारकास् तेषां नास्ति दृष्टजन्मवेदनीयः कर्माशयः। न हि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादिनिरन्तरोपभोग्या वेदना संभवतीति। शेषं सुगमम्॥2.12॥

सति मूले तद्विपाको जात्यायुर्भोगाः॥2.13॥

स्याद् एतद् अविद्यामूलत्वे कर्माशयस्य विद्योत्पादे सत्य् अविद्याविनाशान् मा नाम कर्माशयान्तरं चैषीत्। प्राचां तु कर्माशयानाम् अनादिभवपरम्परासंचितानाम् असंख्यातानाम् अनियतविपाककालानां भोगेन क्षपयितुम् अशक्यत्वाद् अशक्योच्छेदः संसारः स्याद् इत्य् अत आह --- सति मूले तद्विपाको जात्यायुर्भोगाः। एतद् उक्तं भवति --- सुखदुःखफलो हि कर्माशयस् तादर्थ्येन तन्नान्तरीयकतया जन्मायुषी अपि प्रसूते। सुखदुःखे च रागद्वेषानुषक्ते तदविनिर्भागवर्तिनी तदभावे न भवतः। न चास्ति संभवो न च तत्र यस् तुष्यति वोद्विजते वा तच् च तस्य सुखं वा दुःखं वेति। तद् इयम् आत्मभूमिः क्लेशसलिलावसिक्ता कर्मफलप्रसवक्षेत्रम् इत्य् अस्ति क्लेशानां फलोपजननेऽपि कर्माशयसहकारितेति क्लेशसमुच्छेदे सहकारिवैकल्यात् सन्न् अप्य् अनन्तोऽप्य् अनियतविपाककालोऽपि प्रसंख्यानदग्धबीजभावो न फलाय कल्पत इति। उक्तम् अर्थं भाष्यम् एव द्योतयति --- सत्स्व् इति। अत्रैव दृष्टान्तम् आह --- यथा तुषेति। सतुषा अपि दग्धबीजभावाः स्वेदादिभिः। दार्ष्टान्तिके योजयति --- तथेति। ननु न क्लेशाः शक्या अपनेतुं न हि सताम् अपनय इत्य् अत आह --- न प्रसंख्यानदग्धक्लेशबीजभाव इति। विपाकस्य त्रैविध्यम् आह --- स चेति। विपच्यते साध्यते कर्मभिर् इति विपाकः। कर्मैकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा प्रथमा विचारणा। द्वितीया तु कर्मानेकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा। तद् एवं चत्वारो विकल्पाः। तत्र प्रथमं विकल्पम् अपाकरोति --- न तावद् एकं कर्मैकस्य जन्मनः कारणम्। पृच्छति --- कस्माद् इति। उत्तरम् --- अनादिकालैकैकजन्मप्रचितस्यात एवासंख्येयस्यैकैकजन्मक्षपिताद् एकैकस्मात् कर्मणो ऽवशिष्टस्य कर्मणः सांप्रतिकस्य च फलक्रमानिगमाद् अनाश्वासो लोकस्य प्रसक्तः स चानिष्ट इति। एतद् उक्तं भवति --- कर्मक्षयस्य विरलत्वात् तदुत्पत्तिबाहुल्याच् चान्योन्यसंपीडिताः कर्माशया निरन्तरोत्पत्तयो निरुच्छवासाः स्वविपाकं प्रतीति न फलक्रमः शक्यो ऽवधारयितुं प्रेक्षावतेत्य् अनाश्वासः पुण्यानुष्ठानं प्रति प्रसक्त इति। द्वितीयं विकल्पं निराकरोति --- न चैकं कर्मानेकस्य जन्मनः कारणम्। पृच्छति --- कस्माद् इति। उत्तरम् --- अनेकस्मिन्ञ् जन्मन्य् आहितम् एकैकम् एव कर्मानेकस्य जन्मलक्षणस्य विपाकस्य निमित्तम् इत्य् अवशिष्टस्य विपाककालाभावः प्रसक्तः स चाप्य् अनिष्टः कर्मवैफल्येन तदननुष्ठानप्रसङ्गात्। यदैकजन्मसमुच्छेद्ये कर्मण्य् एकस्मिन् फलक्रमानियमाद् अनाश्वासस् तदा कैव कथा बहुजन्मसमुच्छेद्ये कर्मण्य् एकस्मिंस् तत्र ह्य् अवसराभावाद् विपाककालाभाव एव सांप्रतिकस्येति भावः। तृतीयं विकल्पं निराकरोति --- न चानेकं कर्मानेकस्य जन्मनः कारणम्। तत्र हेतुम् आह --- तद् अनेकं जन्म युगपन् न संभवत्य् अयोगिन इति क्रमेण वाच्यम्। यदि हि कर्मसहस्रं युगपज् जन्मसहस्रं प्रसुवीत तत एव कर्मसहस्रप्रक्षयाद् अवशिष्टस्य विपाककालः फलक्रमनियमश् च स्याताम्। न ह्य् अस्ति जन्मनां यौगपद्यम्। एवम् एव प्रथमपक्षोक्तं दूषणम् इत्य् अर्थः। तद् एवं पक्षत्रये निराकृते पारिशेष्याद् अनेकं कर्मैकस्य जन्मनः कारणम् इति पक्षो व्यवतिष्ठत इत्य् आह --- तस्माज् जन्मेति। जन्म च प्रायणं च जन्मप्रायणे तयोर् अन्तरं मध्यं तस्मिन् विचित्रसुखदुःखफलोपहारेण

विचित्रः, यद् अत्यन्तम् उद्भूतम् अनन्तरम् एव फलं दास्यति तत् प्रधानं, यत् तु किंचिद् विलम्बेन तद् उपसर्जनं, प्रायणं मरणं तेनाभिव्यक्तः स्वकार्यारम्भणाभिमुखम् उपनीत एकप्रघट्टकेन युगपत् संमूर्छितो जन्मादिलक्षणे कार्ये कर्तव्य एकलोलीभावम् आपन्न एकम् एव जन्म करोति नानेकम्। तच् च जन्म मनुष्यादिभावस् तेनैव कर्मणा लब्धायुष्कं कालभेदान् नियतजीवितं भवति। तस्मिन्न् आयुषि तेनैव कर्मणा भोगः सुखदुःखसाक्षात्कारः स्वसंबन्धितया संपद्यत इति। तस्माद् असौ कर्माशयो जात्यायुर्भोगहेतुत्वात् त्रिविपाको ऽभिधीयते। अउत्सर्गिकम् उपसंहरति --- अत एकभविकः कर्माशय उक्त इति। एको भव एकभवः। "पूर्वकाल-" [पाणिनिसूत्रम् 2.1.49] इत्यादिना समासः। एकभवो ऽस्यास्तीति मत्वर्थीयष् ठन्। क्वचित् पाठ अइकभविक इति। तत्रैकभवशब्दाद् भवार्थे ठक्प्रत्ययः। एकजन्मावच्छिन्नम् अस्य भवनम् इत्य् अर्थः। तद् एवम् अउत्सर्गिकस्यैकभविकस्य त्रिविपाकत्वम् उक्त्वा दृष्टजन्मवेदनीयस्यैहिकस्य कर्मणस् त्रिविपाकत्वं व्यवच्छिनत्ति --- दृष्टेति। नन्दीश्वरस्य खल्व् अष्टवर्षावच्छिन्नायुषो मनुष्यजन्मनस् तीव्रसंवेगाधिमात्रोपायजन्मा पुण्यभेद आयुर्भोगहेतुत्वाद् द्विपाकः (द्विविपाकः) नहुषस्य तु पार्ष्णिप्रहारविरोधिनागस्त्यस्येन्द्रपदप्राप्तिहेतुनैव कर्मणायुषो विहितत्वाद् अपुण्यभेदो भोगमात्रहेतुः। ननु यथैकभविकः कर्माशयस् तथा किं क्लेशवासना भोगानुकूलाश् च कर्मविपाकानुभववासनास् तथा च मनुष्यस् तिर्यग्योनिम् आपन्नो न तज्जातीयोचितं भुञ्जीतेत्य् अत आह --- क्लेशेति। संमूर्छितम् एकलोलीभावम् आपन्नम्। धर्माधर्माभ्यां व्यवच्छेत्तुं वासनायाः स्वरूपम् आह --- ये संस्कारा इति। अउत्सर्गिकम् एकभविकत्वं क्वचिद् अपवदितुं भूमिकाम् आरचयति --- यस् त्व् असाव् इति। तुशब्देन वासनातो व्यवच्छिनत्ति। दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायम् एकभविकत्वनियमो न त्व् अदृष्टजन्मवेदनीयस्य। किंभूतस्यानियतविपाकस्येति। हेतुं पृच्छति --- कस्माद् इति। हेतुम् आह --- यो हीति। एकां तावद् गतिम् आह --- कृतस्येति। द्वितीयाम् आह --- प्रधानेति। तृतीयाम् आह --- नियतेति। तत्र प्रथमां विभजते --- तत्र कृतस्येति। संन्यासिकर्मभ्योऽशुक्लाकृष्णेभ्योऽन्यानि त्रीण्य् एव कर्माणि कृष्णकृष्णशुक्लशुक्लानि। तद् इह तपःस्वाध्यायादिसाध्यः शुक्लः कर्माशय उदित एवादत्तफलस्य कृष्णस्य नाशकोऽविशेषाच् च शबलस्यापि कृष्णभागयोगाद् इति मन्तव्यम्। अत्रैव भगवान् आम्नायम् उदाहरति --- यत्रेदम् इति। द्वे द्वे ह वै कर्मणी कृष्णकृष्णशुक्ले अपहन्तीति संबन्धः। वीप्सया भूयिष्ठता सूचिता। कस्येत्य् अत आह --- पापकस्य पुंसः। कोऽसाव् अपहन्तीत्य् अत आह --- एको राशिः पुण्यकृतः। समूहस्य समूहिसाध्यत्वात्। तद् अनेन शुक्लः कर्माशयस् तृतीय उक्तः। एतद् उक्तं भवति --- ईदृशो नामायं परपीडादिरहितसाधनसाध्यः शुक्लः कर्माशयो यद् एकोऽपि सन् कृष्णान् कृष्णशुक्लांश् चात्यन्तविरोधिनः कर्माशयान् भूयसोऽप्य् अपहन्ति। तत् तस्माद् इच्छस्वेति च्छान्दसत्वाद् आत्मनेपदम्। शेषं सुगमम्। अत्र च शुक्लकर्मोदयस्यैव स कोऽपि महिमा यत इतरेषाम् अभावो न तु स्वाध्यायादिजन्मनो दुःखात्। न हि दुःखमात्रविरोध्यधर्मोऽपि तु स्वकार्यदुःखविरोधी। न च स्वाध्यायादिजन्यं दुःखं तस्य कार्यं तत्कार्यत्वे स्वाध्यायादिविधानानर्थक्यात् तद्बलाद् एव तदुत्पत्तेः। अनुत्पत्तौ वा कुम्भीपाकाद्य् अपि विधीयेत। अविधाने तु तदनुत्पत्तेर् इति सर्वं चतुरस्रम्। द्वितीयां गतिं विभजते --- प्रधाने कर्मणि ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसादेर् आवापगमनम्। द्वे खलु हिंसादेः कार्ये --- प्रधानाङ्गत्वेन विधानात् तदुपकारः, "न हिंस्यात् सर्वा भूतानि" [महाभारतम् शान्तिपर्व 278.5] इति हिंसायाः प्रतिषिद्धत्वाद् अनर्थश् च। तत्र प्रधानाङ्गत्वेनानुष्ठानाद् अप्रधानतैवेत्य् अतो न द्राग् इत्य् एव प्रधाननिरपेक्षा सती स्वफलम् अनर्थं प्रसोतुम् अर्हति, किं त्व् आरब्धविपाके प्रधाने साहायकम् आचरन्ती व्यवतिष्ठते। प्रधानसाहायकम् आचरन्त्याश् च स्वकार्ये बीजमात्रतयावस्थानं प्रधाने कर्मण्य् आवापगमनम्। यत्रेदम् उक्तं पञ्चशिखेन स्वल्पः संकरो ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनानर्थहेतुनापूर्वेण सपरिहारः शक्यो हि कियता प्रायश्चित्तेन परिहर्तुम्। अथ प्रमादतः प्रायश्चित्तम् अपि नाचरितं प्रधानकर्मविपाकसमये च विपच्येत तथापि यावन् तम् असाव् अनर्थं प्रसूते तावान् सप्रत्यवमर्षो मृष्यन्ते हि पुण्यसंभारोपनीतसुखसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्। अतः कुशलस्य सुमहतः पुण्यस्य नापकर्षाय प्रक्षयाय पर्याप्तः। पृच्छति --- कस्मात्। पुण्यवत उत्तरं ---कुशलं हि मे बह्व् अन्यद् अस्ति प्रधानकर्म परिकरतया व्यवस्थितं दीक्षणीयादिदक्षिणान्तम्। यत्रायं संकरः स्वल्पः स्वर्गेऽप्य् अस्य फले संकीर्णपुण्यलब्धजन्मनः स्वर्गात् सर्वथा दुःखेनापरामृष्टाद् अपकर्षम् अल्पम् अल्पदुःखसंभेदं करिष्यतीति। तृतीयां गतिं विभजते --- नियतेति। बलीयस्त्वेनेह प्राधान्यम् अभिमतं न त्व् अङ्गितया। बलीयस्त्वं च नियतविपाकत्वेनान्यदानवकाशत्वात्। अनियतविपाकस्य तु दुर्बलत्वम् अन्यदा सावकाशत्वात्। चिरम् अवस्थानं बीजभावमात्रेण न पुनः प्रधानोपकारितया तस्य स्वतन्त्रत्वात्। ननु प्रायणेनैकदैव कर्माशयोऽभिव्यज्यत इत्य् उक्तम् इदानीं च चिरावस्थानम् उच्यते तत् कथं परं पूर्वेण न विरुध्यत इत्य् आशयवान् पृच्छति --- कथम् इति। उत्तरम् --- अदृष्टेति। जात्यभिप्रायम् एकवचनम्। तदितरस्य गतिम् उक्ताम् अवधारयति --- यत् त्व् अदृष्टेति। शेषं सुगमम्॥2.13॥

ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्॥2.14॥

उक्तं क्लेशमूलत्वं कर्मणाम्। कर्ममूलत्वं च विपाकानाम् अथ विपाकाः कस्य मूलं येनामी त्यक्तव्या इत्य् अत आह --- ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्। व्याचष्टे --- ते जन्मायुर्भोगा इति। यद्य् अपि जन्मायुषोर् एव ह्लादपरितापपूर्वभावितया तत्फलत्वं न तु भोगस्य ह्लादपरितापोदयानन्तरभाविनस् तदनुभवात्मनस् तथाप्य् अनुभाव्यतया भोग्यतया भोगकर्मतामात्रेण भोगफलत्वम् इति मन्तव्यम्। नन्व् अपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु हेयाः प्रतिकूलवेदनीयत्वात्। कस्मात् पुनः पुण्यहेतवस् त्यज्यन्ते सुखफला अनुकूलवेदनीयत्वात्। न चैषां प्रत्यात्मवेदनीयानुकूलता शक्या सहस्रेणाप्य् अनुमानागमैर् अपाकर्तुम्। न च ह्लादपरितापौ परस्पराविनाभूतौ यतो ह्लाद उपादीयमाने परितापेऽप्य् अवर्जनीयतयापतेत्। तयोर् भिन्नहेतुकत्वाद् भिन्नरूपत्वाच् चेत्य् अत आह --- यथा चेदम् इति॥2.14॥

परिणामतापसंस्कारदुःखैर् गुणवृत्तिविरोधाच् च दुःखम् एव सर्वं विवेकिनः॥2.15॥

यद्य् अपि न पृथग्जनैः प्रतिकूलात्मतया विषयसुखकाले संवेद्यते दुःखं तथापि संवेद्यते योगिभिर् इति प्रश्नपूर्वकं तदुपपादनाय सूत्रम् अवतारयति -

-- कथं, तदुपपद्यत (तदुपपाद्यत) इति। परिणामेत्यादिसूत्रम्। परिणामश् च तापश् च संस्कारश् चैतान्य् एव दुःखानि तैर् इति। परिणामदुःखतया विषयसुखस्य दुःखताम् आह --- सर्वस्यायम् इति। न खलु सुखं रागानुवेधम् अन्तरेण संभवति। न ह्य् अस्ति संभवो न तत्र तुष्यति तच् च तस्य सुखम् इति। रागस्य च प्रवृत्तिहेतुत्वात् प्रवृत्तेश् च पुण्यापुण्योपचयहेतुत्वात् तत्रास्ति रागजः कर्माशयोऽसतो ऽनुपजननात्। तदा (तथा) च सुखं भुञ्जानस् तत्र सक्तो ऽपि विच्छिन्नावस्थेन द्वेषेण द्वेष्टि दुःखसाधनानि, तानि परिहर्तुम् अशक्तो मुह्यति चेति द्वेषमोहकृतोऽप्य् अस्ति कर्माशयः। द्वेषवन् मोहस्यापि विपर्ययापरनाम्नः कर्माशयहेतुत्वम् अविरुद्धम्। ननु कथं रक्तो द्वेष्टि मुह्यति वा रागसमये द्वेषमोहयोर् अदर्शनाद् इत्य् अत आह --- तथा चोक्तं विच्छिन्नावस्थान् क्लेशान् उपपादयद्भिर् अस्माभिः। तद् अनेन वाङ्मनसप्रवृत्तिजन्मनी पुण्यापुण्ये दर्शिते। रागादिजन्मनः कर्तव्यम् इदम् इति मानसस्य संकल्पस्य साभिलाषत्वेन वाचनिकत्वस्याप्य् अविशेषात्। यथाहुः ---

"साभिलाषश् च संकल्पो वाच्यार्थान् नातिरिच्यते" इति।

शारीरम् अपि कर्माशयं दर्शयति --- नानुपहत्येति। अत एव धर्मशास्त्रकाराः "पञ्च सूना गृहस्थस्य" [मनुस्मृतिः 3.68] इत्य् आहुः। स्याद् एतन् न प्रत्यात्मवेदनीयस्य विषयसुखस्य प्रत्याख्यानम् उचितं योगिनाम् अनुभवविरोधाद् इत्य् अत आह --- विषयसुखं चाविद्येत्य् उक्तं चतुर्विधविपर्यासलक्षणाम् अविद्यां दर्शयद्भिर् इति। नापातमात्रम् आद्रियन्ते वृद्धाः। अस्ति खल्व् आपाततो मधुविषसंपृक्तान् नोपभोगेऽपि सुखानुभवः प्रत्यात्मवेदनीयः किं त्व् आयत्याम् असुखम्। इयं च दर्शिता भगवतैव ---

"विषयेन्द्रियसंयोगाद् यत् तद् अग्रेऽमृतोपमम्। परिणामे विषम् इव तत् सुखं राजसं स्मृतम्" [भगवद्गीता 18.38] इति॥

चोदयति --- या भोगेष्व् इति। न वयं विषयह्लादं सुखम् आतिष्ठामहे किं तु तृप्यतां (तृप्तां) पुंसाम्। तत्तद्विषयप्रार्थनापरिक्लिष्टचेतसां तृष्णैव महद् दुःखम्। न चेयम् उपभोगम् अन्तरेण शाम्यति। न चास्याः प्रशमो रागाद्यनुविद्ध इति नास्य परिणामदुःखतेति भावः। तृप्तेस् तृष्णाक्षयाद् धेतोर् इन्द्रियाणाम् उपशान्तिर् अप्रवर्तनं विषयेष्व् इत्य् अर्थः। एतद् एव व्यतिरेकमुखेन (व्यतिरेकमुखेण) स्पष्टयति --- या लौल्याद् इति। परिहरति --- न चेन्द्रियाणाम् इति। हेताव् अनोः प्रयोगः। सत्यं तृष्णाक्षयः सुखम् अनवद्यं तस्य तु न भोगाभ्यासो हेतुर् अपि तु तृष्णाया एव तद्विरोधिन्याः। यथाहुः ---

"न जातु कामः कामानाम् उपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते [महाभारतम् आदिपर्व 85.12] इति॥"

शेषम् अतिरोहितम्। तापदुःखतां पृच्छति --- अथ केति। उत्तरं --- सर्वस्येति। सर्वजनप्रसिद्धत्वेन तत्स्वरूपप्रपञ्चम् अकृत्वा तापदुःखतापि परिणाम्अदुःखतासमतया प्रपञ्चितेति। संस्कारदुःखतां पृच्छति --- केति। उत्तरं --- सुखेति। सुखानुभवो हि संस्कारम् आधत्ते। स च सुखस्मरणं तच् च रागं स च मनःकायवचनचेष्टां सा च पुण्यापुण्ये ततो विपाकानुभवस् ततो वासनेत्य् एवम् अनादितेति। अत्र च सुखदुःखसंस्कारातिशयात् तत्स्मरणं तस्माच् च रागद्वेषौ ताभ्यां कर्माणि कर्मभ्यो विपाक इति योजना। तद् एवं दुःखस्रोतः प्रसृतं योगिनम् एव क्लिश्नाति नेतरं पृथग्जनम् इत्य् आह --- एवम् इदम् अनादीति। इतरं तु त्रिपर्वाणस् तापा अनुप्लवन्त इति संबन्धः। आधिभौतिकाधिदैविकयोस् तापयोर् बाह्यत्वेनैकत्वं विवक्षितम्। चित्ते वृत्तिर् अस्या इत्य् अविद्या चित्तवृत्तिस् तया हातव्य एव बुद्धीन्द्रियशरीरादौ दारापत्यादौ चाहंकारममकारानुपातिनम् इति। तद् अत्र न सम्यग्दर्शनाद् अन्यत् परित्राणम् अस्तीत्य् आह --- तद् एवम् इति। तद् एवम् अउपाधिकं विषयसुखस्य परिणामतः संस्कारतस् तापसंयोगाच् च दुःखत्वम् अभिधाय स्वाभाविकम् आदर्शयति --- गुणवृत्तिविरोधाच् चेति। व्याचष्टे --- प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिरूपेण परिणता गुणाः सत्त्वरजस्तमांसि परस्परानुग्रहतन्त्राः शान्तं सुखात्मकं घोरं दुःखात्मकं मूढं विषादात्मकम् एव प्रत्ययं सुखोपभोगरूपम् अपि त्रिगुणम् आरभन्ते। न च सो ऽपि तादृशप्रत्ययरूपोऽस्य परिणामः स्थिर इत्य् आह --- चलं च गुणवृत्तम् इति क्षिप्रपरिणामि चित्तम् उक्तम्। नन्व् एकः प्रत्ययः कथं परस्परविरुद्धशान्तघोरमूढत्वान्य् एकदा प्रतिपद्यत इत्य् अत आह --- रूपातिशया वृत्त्यतिशयाश् च परस्परेण विरुध्यन्ते। रूपाणि अष्टौ भावा धर्मादयो वृत्तयः सुखाद्यास् तद् इह धर्मेण विपच्यमानेनाधर्मस् तादृशो विरुध्यते। एवं ज्ञानवैराग्यैश्वर्यैः सुखादिभिश् च तादृशान्य् एव तद्विपरीतानि विरुध्यन्ते। सामान्यानि त्व् असमुदाचरद्रुपाण्य् अतिशयैः समुदाचरद्भिः सहाविरोधात् प्रवर्तन्त इति। ननु गृह्णीम एतत् तथापि विषयसुखस्य कुतः स्वाभाविकी दुःखतेत्य् अत आह --- एवम् एत इति। उपादानाभेदाद् उपादानात्मकत्वाच् चोपादेयस्याप्य् अभेद इत्य् अर्थः। तत् किम् इदानीम् आत्यन्तिकम् एव तादात्म्यं तथा च बुद्धिव्यपदेशभेदौ न कल्पेते इत्य् अत आह --- गुणप्रधानेति। सामान्यात्मना गुणभावो ऽतिशयात्मना च प्राधान्यम्। तस्माद् उपाधितः स्वभावतश् च दुःखम् एव सर्वं विवेकिन इति। दुःखं च हेयं प्रेक्षावता। न च तन्निदानहानम् अन्तरेण तद् धेयं भवितुम् अर्हति। न चापरिज्ञातं निदानं शक्यं हातुम् इति मूलनिदानम् अस्य दर्शयति --- तद् अस्येति। दुःखसमुदायस्य प्रभव उत्पत्तिर् यतस् तद्बीजम् इत्य् अर्थः। तदुच्छेदहेतुं दर्शयति --- तस्याश् चेति। इदानीम् अस्य शास्त्रस्य सर्वानुग्रहार्थं प्रवृत्तस्य तद्विधैनैव शास्त्रेण सादृश्यं दर्शयति --- यथेति। चत्वारो व्यूहाः संक्षिप्तावयवरचना यस्य तत् तथोक्तम्। ननु दुःखं हेयम् उक्त्वा संसारं हेयम् अभिदधतः कुतो न विरोध इत्य् अत आह --- तत्र दुःखबहुल इति। यत्कृत्वाविद्या संसारं करोति तद् अस्या अवान्तरव्यापारं संसारहेतुम् आह --- प्रधानपुरुषयोर् इति। मोक्षस्वरूपम् आह --- संयोगस्येति। मोक्षोपायम् आह --- हानोपाय इति। केचित् पश्यन्ति, हातुः स्वरूपोच्छेद एव मोक्षः। यथाहुः ---

"प्रदीपस्येव निर्वाणं विमोक्षस् तस्य चेतसः" इति।

अन्ये तु सवासनक्लेशसमुच्छेदाद् विशुद्धविज्ञानोत्पाद एव मोक्ष इत्य् आचक्षते तान् प्रत्याह --- तत्रेति। तत्र हानं तावद् दूषयति --- हाने तस्येति। न हि प्रेक्षावान् कश्चिद् आत्मोच्छेदाय यतते। ननु दृश्यन्ते तीव्रगदोन्मूलितसकलसुखां दुःखमयीम् इव मूर्तिम् उद्वहन्तः स्वोच्छेदाय यतमानाः। सत्यम्। केचिद् एव ते, न त्व् एवं संसारिणो विविधविचित्रदेवाद्यानन्दभोगभागिनस् ते ऽपि च मोक्षमाणा दृश्यन्ते तस्माद् अपुरुषार्थत्वप्रसक्तेर् न हातुः स्वरूपोच्छेदो मोक्षोऽभ्युपेयः। अस्तु तर्हि हातुः स्वरूपम् उपादेयम् इत्य् अत आह --- उपादाने च हेतुवादः। उपादाने हि कार्यत्वेनानित्यत्वे सति मोक्षत्वाद् एव च्यवेत। अमृतत्वं हि मोक्षः। नापि विशुद्धो विज्ञानसंतानो भवत्य् अमृतः। संतानिभ्यो व्यतिरिक्तस्य संतानस्य वस्तुसतोऽभावात्। संतानिनां चानित्यत्वात्। तस्मात् तथा यतितव्यं यथा शाश्वतवादो भवति। तथा च पुरुषार्थतापवर्गस्येत्य् आह --- उभयप्रत्याख्यान इति। तस्मात् स्वरूपावस्थानम् एवात्मनो मोक्ष इति। एतद् एव सम्यग्दर्शनम्॥2.15॥

हेयं दुःखम् अनागतम्॥2.16॥

तद् एतच् छास्त्रं चतुर्व्यूहम् इत्य् अभिधीयते --- हेयं दुःखम् अनागतम्। अनागतम् इत्य् अतीतवर्तमाने व्यवच्छिन्ने। तत्रोपपत्तिम् आह --- दुःखम् अतीतम् इति। ननु वर्तमानम् उपभुज्यमानं न भोगेनातिवाहितम् इति कस्मान् न हेयम् इत्य् अत आह --- वर्तमानं चेति। सुगमम्॥ 2.16॥

द्रष्टृदृश्ययोः संयोगो हेयहेतुः॥2.17॥

हेयम् उक्तं तस्य निदानम् उच्यते --- द्रष्टृदृश्ययोः संयोगो हेयहेतुः। द्रष्टुः स्वरूपम् आह --- द्रष्टेति। चितिच्छायापत्तिर् एव बुद्धेर् बुद्धिप्रतिसंवेदित्वम् उदासीनस्यापि पुंसः। नन्व् एतावतापि बुद्धिर् एवानेन दृश्येत, न दृश्येरन् शब्दादयोऽत्यन्तव्यवहिता इत्य् अत आह --- दृश्या बुद्धिसत्त्वेति। इन्द्रियप्रणालिकया बुद्धौ शब्दाद्याकारेण परिणतायां दृश्यायां भवन्ति शब्दादयोऽपि धर्मा दृश्या इत्य् अर्थः। ननु तदाकारापत्त्या बुद्धिः शब्दाद्याकारा भवतु पुंसस् तु बुद्धिसंबन्धेऽभ्युपगम्यमाने परिणामित्वम् असंबन्धे वा कथं तेषां बुद्धिसत्त्वोपारूढानाम् अपि शब्दादीनां दृश्यत्वम्। न हि दृशिनासंस्पृष्टं दृश्यं दृष्टम् इत्य् अत आह --- तद् एतद् दृश्यम् इति। प्रपञ्चितम् इदम् अस्माभिः प्रथमपाद एव यथा चित्यासंपृक्तम् अपि बुद्धिसत्त्वम् अत्यन्तस्वच्छतया चितिबिम्बोद्ग्राहितया समापन्नचैतन्यम् इव शब्दाद्य् अनुभवतीति। अत एव च शब्दाद्याकारपरिणतबुद्धिसत्त्वोपनीतान् शब्दादीन् भुञ्जानः स्वामी भवति द्रष्टा तादृशं चास्य बुद्धिसत्त्वं स्वं भवति। तद् एतद् बुद्धिसत्त्वं शब्दाद्याकारवद् दृश्यम् अयस्कान्तमणिकल्पं पुरुषस्य स्वं भवति दृशिरूपस्य स्वामिनः। कस्मात्, अनुभवकर्मविषयताम् आपन्नं यतः। अनुभवो भोगः पुरुषस्य कर्म क्रिया तद्विषयतां भुज्यमानताम् आपन्नं यस्माद् अतः स्वं भवति। ननु स्वयंप्रकाशं बुद्धिसत्त्वं कथम् अनुभवविषय इत्य् अत आह --- अन्यस्वरूपेणेति। यदि हि चैतन्यरूपं वस्तुतो बुद्धिसत्त्वं स्याद् भवेत् स्वयंप्रकाशं किं तु स्वं चैत्अन्याद् अन्यज् जडरूपं तेन प्रतिलब्धात्मकं तस्मात् तदनुभवविषयः। ननु यस्य हि यत्र किंचिद् आयतते तत् तदधीनम्। न च बुद्धिसत्त्वस्य पुरुषम् उदासीनं प्रति किंचिद् आयतत इति कथं तत्तन्त्रम्। तथा च न तस्य कर्मेत्य् अत आह --- स्वतन्त्रम् अपि परार्थत्वात् पुरुषार्थत्वात् परतन्त्रं पुरुषतन्त्रम्। नन्व् अयं दृग्दर्शनशक्त्योः संबन्धः स्वाभाविको वा स्यान् नैमित्तिको वा। स्वाभाविकत्वे संबन्धिनोर् नित्यत्वाद् अशक्योच्छेदः संबन्धस् तथा च संसारनित्यत्वम्। नैमित्तिकत्वे तु क्लेशकर्मतद्वासनानाम् अन्तःकरणवृत्तितया सत्य् अन्तःकरणे भावाद् अन्तःकरणस्य च तन्निमित्तत्वे परस्पराश्रयप्रसङ्गाद् अनादित्वस्य च सर्गादाव् असंभवाद् अनुत्पाद एव संसारस्य स्यात्। यथोक्तम् ---

"पुमान् अकर्ता येषां तु तेषाम् अपि गुणैः क्रिया। कथम् आदौ भवेत् तत्र कर्म तावन् न विद्यते॥ मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयोऽपि वा। मनोवृत्तिर् हि सर्वेषां न चोत्पन्नं मनस् तदा॥"

इति शङ्काम् अपनयति --- तयोर् दृग्दर्शनशक्त्योर् अनादिर् अर्थकृतः संयोगो हेयहेतुः। सत्यम्। न स्वाभाविकः संबन्धो नैमित्तिकस् तु। न चैवम् आदिमान् अनादिनिमित्तप्रभवतया तस्याप्य् अनादित्वात्। क्लेशकर्मतद्वासनासंतानश् चायम् अनादिः प्रतिसर्गावस्थायां च सहान्तःकरणेन प्रधानसाम्यम् उपगतोऽपि सर्गादौ पुनस् तादृग् एव प्रादुर्भवति वर्षापाय इवोद्भिज्जभेदो मृद्भावम् उपगतोऽपि पुनर् वर्षासु पूर्वरूप इत्य् असकृद् आवेदितम्। प्राग्भावितया संयोगस्याविद्या कारणं स्थितिहेतुतया पुरुषार्थः कारणं तद्वशेन तस्य स्थितेस् तद् इदम् उक्तम् अर्थकृत इति। तथा चोक्तं पञ्चशिखेन तत्संयोगो बुद्धिसंयोगः स एव हेतुर् दुःखस्य, तस्य विवर्जनात् स्याद् अयम् आत्यन्तिको दुःखप्रतीकारः। अर्थात् तदपरिवर्जने दुःखम् इत्य् उक्तं भवति। तत्रैवात्यन्तप्रसिद्धं निदर्शनम् आह --- तद्यथेति। पादत्राणम् उपानत्। स्याद् एतत्। गुणसंयोगस् तापहेतुर् इत्य् उच्यमाने गुणानां तापकत्वम् अभ्युपेतम्। न च तपिक्रियाया अस्त्य् आदेर् इव कर्तृस्थो भावो येन तप्यम् अन्यन् नापेक्षेत। न चास्यास् तप्यतया पुरुषः कर्म तस्यापरिणामितया क्रियाजनितफलशालित्वायोगात्। तस्मात् तपेस् तप्यव्याप्तस्य तन्निवृत्तौ निवृत्तिम् अवगच्छामो ज्वलनविरहेणेव धूमाभावम् इत्य् अत आह --- अत्रापि तापकस्येति। गुणानाम् एव तप्यतापकभावस् तत्र मृदुत्वात् पादतलवत् सत्त्वं तप्यं रजस् तु तीव्रतया तापकम्। पृच्छति --- कस्मात् सत्त्वम् एव तप्यं न तु पुरुषः। उत्तरम् --- तपिक्रियाया इति। तत् किम् इदानीं पुरुषो न तप्यते। तथा चाचेतनस्यास्तु सत्त्वस्य तापः किं नश् छिन्नम् इत्य् अत आह --- दर्शितविषयत्वात् सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽप्य् अनुतप्यत इति। दर्शितविषयत्वम् अनुतापहेतुस् तच् च प्राग् व्याख्यातम्॥2.17॥

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्॥2.18॥

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्। व्याचष्टे --- प्रकाशेति। सत्त्वस्य हि भागः प्रकाशस् तामसेन भागेन दैन्येन वा राजसेन वा दुःखेनानुरज्यते। एवं राजसादिष्व् अपि द्रष्टव्यम्। तद् इदम् उक्तम् --- परस्परोपरक्तप्रविभागा इति। पुरुषेण सह संयोगवियोगधर्माणः। यथाम्नायते ---

"अजाम् एकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्य् एको जुषमाणोऽनुशेते जहात्य् एनां भुक्तभोगाम् अजोऽन्यः" [तैत्तिरीयारण्यकम् 6.10] इति॥

इतरेतरोपाश्रयेणोपार्जिता मूर्तिः पृथिव्यादिरूपा यैस् ते तथोक्ताः। स्याद् एतत् सत्त्वेन शान्तप्रत्यये जनयितव्ये रजस्तमसोर् अपि सत्त्वाङ्गत्वेन तत्र हेतुभावाद् अस्ति सामर्थ्यम् इति यदापि च रजस्तमसोर् अङ्गित्वं तदापि शान्त एव प्रत्यय उदीयेत न घोरो मूढो वा सत्त्वप्राधान्य इवेत्य् अत आह --- परस्पराङ्गाङ्गित्वेऽप्य् असंभिन्नशक्तिप्रविभागाः। भवतु शान्ते प्रत्यये जनयितव्ये रजस्तमसोर् अङ्गभावस् तथापि नैषां शक्तयः संकीर्यन्ते कार्यासंकरोन्नेयो हि शक्तीनाम् असंकरः। असंकीर्णेन च समुदाचरता रूपेण शान्तघोरमूढरूपाणि कार्याणि दृश्यन्त इति सिद्धं शक्तीनाम् असंभेद इति। स्याद् एतत्। असंभेदश् चेच् छक्तीनां न संभूयकारित्वं गुणानाम्। न जातु भिन्नशक्तीनां संभूयकारित्वं दृष्टम्। न हि तन्तुमृत्पिण्डवीरणादीनि घटादीन् संभूय कुर्वत इत्य् अत आह --- तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः। यद्य् अपि तुल्यजातीय उपादानशक्तिर् नान्यत्र सहकारिशक्तिस् त्व् अतुल्यजातीये। पटे तु जनयितव्ये न वीरणानाम् अस्ति सहकारिशक्तिर् अपीति न तैस् तन्तूनां संभूयकारितेति भावः। तुल्यजातीयातुल्यजातीयेषु शक्येषु ये शक्तिभेदास् तान् अनुपतितुं शीलं येषां ते तथोक्ताः। प्रधानवेलायाम् इति। दिव्यशरीरे जनयितव्ये सत्त्वगुणः प्रधानम्। अङ्गे रजस्तमसी। एवं मनुष्यशरीरे जनयितव्ये रजः प्रधानम् अङ्गे सत्त्वतमसी। एवं तिर्यक्शरीरे जनयितव्ये तमः प्रधानम् अङ्गे सत्त्वरजसी। तेनैते गुणाः प्रधानत्ववेलायाम् उपदर्शितसंनिधानाः कार्योपजननं प्रत्युद्भूतवृत्तय इत्य् अर्थः। प्रधानशब्दश् च भावप्रधानः। यथा "द्व्येकयोर् द्विवचनैकवचने" [पाणिनिसूत्रम् 1.4.22] इत्य् अत्र द्वित्वैकत्वयोर् इति। अन्यथा द्व्येकेष्व् इति स्यात्। ननु तदा प्रधानम् उद्भूततया शक्यम् अस्तीति वक्तुम् अनुद्भूतानां तु तदङ्गानां सद्भावे किं प्रमाणम् इत्य् अत आह --- गुणत्वेऽपि चेति। यद्य् अपि नोद्भूतास् तथापि गुणानाम् अविवेकित्वात् संभूयकारित्वाच् च व्यापारमात्रेण सहकारितया प्रधानेऽन्तर्णीतं सद् अनुमितम् अस्तित्वं येषां ते तथोक्ताः। ननु सन्तु गुणाः संभूयकारिणः समर्थाः कस्मात् पुनः कुर्वन्ति न हि समर्थम् इत्य् एव कार्यं जनयति। मा भूद् अस्य कार्योपजननं प्रति विराम इत्य् अत आह --- पुरुषार्थकर्तव्यतयेति। ततो निर्वर्तितनिखिलपुरुषार्थानां गुणानां उपरमः कार्यानारम्भणम् इत्य् उक्तं भवति। ननु पुरुषस्यानुपकुर्वतः कथं पुरुषार्थेन प्रयुज्यत इत्य् अत आह --- संनिधिमात्रेति। ननु धर्माधर्मलक्षणम् एव निमित्तं प्रयोजकं गुणानां तत् किम् उच्यते पुरुषार्थप्रयुक्ता इत्य् अत आह --- प्रत्ययम् अन्तरेणेति। एकतमस्य सत्त्वस्य रजसस् तमसो वा प्रधानस्य स्वकार्ये प्रवृत्तस्य वृत्तिम् इतरे प्रत्ययं निमित्तं धर्मादिकं विनैवानुवर्तमानाः। यथा च वक्ष्यति --- "निमित्तम् अप्रयोजकं प्रकृतीनां वरणभेदस् तु ततः क्षेत्रिकवत्" [योगसूत्रम् 4.3] इति। एते गुणाः प्रधानशब्दवाच्या भवन्तीति संबन्धः। प्रधीयत आधीयते विश्वं कार्यम् एभिर् इति व्युत्पत्त्यैतद् दृश्यम् उच्यते। तद् एवं गुणानां शीलम् अभिधाय तस्य कार्यम् आह --- तद् एतद् इति। सत्कार्यवादसिद्धौ यद् यदात्मकं तत् तेन रूपेण परिणमत इति भूतेन्द्रियात्मकत्वं दीपयति --- भूतभावेनेत्यादिना। भोगापवर्गार्थम् इति सूत्रावयवम् अवतारयति --- तत् तु नाप्रयोजनम् अपि तु प्रयोजनम् उररीकृत्य प्रवर्तते। भोगं विवृणोति --- तत्रेति। सुखदुःखे हि त्रिगुणाया बुद्धेः स्वरूपे तस्यास् तथात्वेन परिणामात् तथापि गुणगततयावधारणे न भोग इत्य् अत आह --- अविभागापन्नम् इति। एतच् चासकृद् विवेचितम्। अपवर्गं विवृणोति --- भोक्तुर् इति। अपवृज्यतेऽनेनेत्य् अपवर्गः। प्रयोजनान्तरस्याभावम् आह --- द्वयोर् इति। तथा चोक्तं पञ्चशिखेन, --- अयं तु खल्व् इति। ननु वस्तुतो भोगापवर्गौ बुद्धिकृतौ बुद्धिवर्तिनौ च कथं तदकारणे तदन्धिकरणे च पुरुषे व्यपदिश्येते इत्य् अत आह --- ताव् एताव् इति। भोक्तृत्वं च पुरुषस्योपपादितम् अग्रे च वक्ष्यते। परमार्थतस् तु --- बुद्धेर् एव पुरुषार्थापरिसमाप्तिर् इति। एतेन भोगापवर्गयोः पुरुषसंबन्धित्वकथनमार्गेण ग्रहणादयोऽपि पुरुषसंबन्धिनो वेदितव्याः। तत्र स्वरूपमात्रेणार्थज्ञानं ग्रहणं, तत्र स्मृतिर् धारणं, तद्गतानां विशेषाणाम् ऊहनम् ऊहः, समारोपितानां च युक्त्यापनयोऽपोहः। ताभ्याम् एवोहापोहाभ्यां तदवधारणं तत्त्वज्ञानम्। तत्त्वावधारणपूर्वं हानोपादानज्ञानम् अभिनिवेशः॥2.18॥

विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि॥2.19॥

दृश्यानां गुणानां स्वरूपभेदावधारणार्थम् इदम् आरभ्यते --- विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि। येषाम् अविशेषाणां शान्तघोरमूढलक्षणविशेषरहितानां ये विशेषा विकारा एव न तु तत्त्वान्तरप्रकृतयस् तेषां तान् आह --- तत्राकाशेति। उत्पादक्रमानुरूप एवोपन्यासक्रमः। अस्मितालक्षणस्याविशेषस्य सत्त्वप्रधानस्य बुद्धीन्द्रियाणि विशेषाः। राजसस्य कर्मेन्द्रियाणि। मनस् तूभयात्मकम् उभयप्रधानस्येति मन्तव्यम्। अत्र च पञ्चतन्मात्राणि बुद्धिकारणकान्य् अविशेषत्वाद् अस्मितावद् इति। विकारहेतुत्वं चाविशेषत्वं तन्मात्रेषु चास्मितायां चाविशिष्टम्। संकलय्य विशेषान् परिगणयति --- गुणानाम् एष इति। अविशेषान् अपि गणयति --- षड् इति। संकलय्योदाहरति --- तद्यथेति। विशिष्टं ह्य् अपरं परेणेति गन्ध आत्मना पञ्चलक्षणो रस आत्मना चतुर्लक्षणो रूपम् आत्मना त्रिलक्षणं स्पर्श आत्मना द्विलक्षणः शब्दः शब्दलक्षण एवेति। कस्य पुनर् अमी षडविशेषाः कार्यम् इत्य् अत आह --- एते सत्तामात्रस्यात्मन इति। पुरुषार्थक्रियाक्षमं सत् तस्य भावः सत्ता तन्मात्रं तन् महत्तत्त्वम्। यावती काचित् पुरुषार्थक्रिया शब्दादिभोगलक्षणा सत्त्वपुरुषान्यताख्यातिलक्षणा वास्ति सा सर्वा महति बुद्धौ समाप्यत इत्य् अर्थः। आत्मन इति स्वरूपोपदर्शनेन तुच्छत्वं निषेधति। प्रकृतेर् अयम् आद्यः परिणामो वास्तवो न तु तद्विवर्त इति यावत्। यत् तत्परं

विप्रकृष्टकालम् अविशेषेभ्यस् तदपेक्षया संनिकृष्टकालेभ्यो लिङ्गमात्रं महत्तत्त्वं तस्मिन्न् एते षडविशेषाः सत्तामात्रे महत्य् आत्मन्य् अवस्थाय सत्कार्यवादसिद्धेर् विवृद्धिकाष्ठाम् अनुभवन्ति प्राप्नुवन्ति। ये पुनर् अविशेषाणां विशेषपरिणामास् तेषां च धर्मलक्षणावस्थाः परिणामा इति। सेयम् एषां विवृद्धिकाष्ठा परिणामकाष्ठेति। तद् एवम् उत्पत्तिक्रमम् अभिधाय प्रलयक्रमम् आह --- प्रतिसंसृज्यमानाः प्रलीयमानाः स्वात्मनि लीनविशेषा अविशेषास् तस्मिन्न् एव सत्तामात्रे महत्य् आत्मन्य् अवस्थाय विलीय सहैव महता ते ऽविशेषा अव्यक्तम् अन्यत्र लयं न गच्छतीत्य् अलिङ्गं प्रतियन्ति। तस्यैव विशेषणं निःसत्तासत्तं सत्ता पुरुषार्थक्रियाक्षमत्वम्, असत्ता तुच्छता निष्क्रान्तं सत्ताया असत्तायाश् च यत् तत् तथोक्तम्। एतद् उक्तं भवति --- सत्त्वरजस्तमसां साम्यावस्था न क्वचित् पुरुषार्थ उपयुज्यत इति न सती नापि गगनकमलिनीव तुच्छस्वभावा तेन नासत्य् अपीति। स्याद् एतत्। अव्यक्तावस्थायाम् अप्य् अस्ति महदादि तदात्मना, न हि सतो विनाशो विनाशे वा न पुनरुत्पादो न ह्य् असत उत्पाद इति महदादिसद्भावात् पुरुषार्थक्रिया प्रवर्तेत तत् कथं निःसत्त्वम् अव्यक्तम् इत्य् अत आह --- निःसदसद् इति। निष्क्रान्तं कारणं सतः कार्यात्। यद्य् अपि कारणावस्थायां सद् एव शक्त्यात्मना कार्यं तथापि स्वोचिताम् अर्थक्रियाम् अकुर्वद् असद् इत्य् उक्तम्। न चैतत् कारणं शशविषाणायमानकार्यम् इत्य् आह --- निरसद् इति। निष्क्रान्तम् असतस् तुच्छरूपात् कार्यात् तथा सति हि व्योमारविन्दम् इवास्मान् न कार्यम् उत्पद्येतेति भावः। प्रतिसर्गम् उक्तम् उपसंहरति --- एष तेषाम् इति। एष इत्य् अनन्तरोक्तात् पूर्वस्य परामर्शः। लिङ्गमात्राद्यवस्थाः पुरुषार्थकृतत्वाद् अनित्या अलिङ्गावस्था तु पुरुषार्थेनाकृतत्वान् नित्येत्य् अत्र हेतुम् आह --- अलिङ्गावस्थायाम् इति। कस्मात् पुनर् न पुरुषार्थो हेतुर् इत्य् अत आह --- नालिङ्गावस्थायाम् इति। भवतिना विषयेण विषयिज्ञानम् उपलक्षयति। एतद् उक्तं भवति --- एवं हि पुरुषार्थता कारणम् अलिङ्गावस्थायां ज्ञायेत। यद्य् अलिङ्गावस्था शब्दाद्युपभोगं वा सत्त्वपुरुषान्यताख्यातिं वा पुरुषार्थं निर्वर्तयेत् तन्निर्वर्तने हि न साम्यावस्था स्यात्। तस्मात् पुरुषार्थकारणत्वम् अस्यां न ज्ञायत इति नास्याः पुरुषार्थता हेतुः। उपसंहरति --- नासाव् इति। इतिस् तस्मादर्थे। अनित्याम् अवस्थाम् आह --- त्रयाणां लिङ्गमात्राविशेषविशेषाणाम् इति। पर्वस्वरूपं दर्शयित्वा गुणस्वरूपम् आह --- गुणास् त्व् इति। निदर्शनम् आह --- यथा देवदत्त इति। यत्रात्यन्तभिन्नानां गवाम् उपचयापचयौ देवदत्तोपचयापचयहेतू तत्र कैव कथा गुणेभ्यो भिन्नाभिन्नानां व्यक्तीनाम् उपजनापाययोर् इत्य् अर्थः। ननु सर्गक्रमः किम् अनियतो नेत्य् आह --- लिङ्गमात्रम् इति। न खलु न्यग्रोधधाना अह्नायैव न्यग्रोधशाखिनं सान्द्रशाद्वलदलजटिलशाखाकाण्डनिपीतमार्तण्डचण्डातपमण्डलम् आरभन्ते किं तु क्षितिसलिलतेजःसंपर्कात् परम्परयोपजायमानाङ्कुरपत्रकाण्डनालादिक्रमेण। एवम् इहापि युक्त्यागमसिद्धः क्रम आस्थेय इति। कथं भूतेन्द्रियाण्य् अविशेषसंसृष्टानीत्य् अत आह --- तथा चोक्तं पुरस्ताद् इदम् एव सूत्रं प्रथमं व्याचक्षाणैः। अथ विशेषाणां कस्मान् न तत्त्वान्तरपरिणाम उक्त इत्य् अत आह --- न विशेषेभ्य इति। तत् किम् इदानीम् अपरिणामिन एव विशेषास् तथा च नित्याः प्रसज्येरन्न् इत्य् अत आह --- तेषां त्व् इति॥2.19॥

द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः॥2.20॥

व्याख्यातं दृश्यं द्रष्टुः स्वरूपावधारणार्थम् इदम् आरभ्यते --- द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः। व्याचष्टे --- दृशिमात्र इति। विशेषणानि धर्मास् तैर् अपरामृष्टा। तद् अनेन मात्रग्रहणस्य तात्पर्यं दर्शितम्। स्याद् एतत्। यदि सर्वविशेषणरहिता दृक्शक्तिर् न तर्हि शब्दादयो दृश्येरन्। न हि दृशिनासंस्पृष्टं दृश्यं भवतीत्य् अत आह --- स पुरुष इति। बुद्धिदर्पणे पुरुषप्रतिबिम्बसंक्रान्तिर् एव बुद्धिप्रतिसंवेदित्वं पुंसः। तथा च दृशिच्छायापन्नया बुद्ध्या संसृष्टाः शब्दादयो भवन्ति दृश्या इत्य् अर्थः। स्याद् एतत्। पारमार्थिकम् एव बुद्धिचैतन्ययोः कस्माद् अइक्यं नोपेयते किम् अनया तच्छायापत्त्येत्य् अत आह --- स बुद्धेर् न सरूप इति। तथासरूपस्य तच्छायापत्तिर् अपि दुर्घटेत्य् अत आह --- नात्यन्तं विरूप इति। तत्र सारूप्यं निषेधति --- न तावद् इति। हेतुं पृच्छति --- कस्मात्। सहेतुकं वैरूप्ये हेतुम् आह --- ज्ञातेति। परिणामिनी बुद्धिर् यस्मात् तस्माद् विरूपा। यदा खल्व् इयं शब्दाद्याकारा भवति तदा ज्ञातो ऽस्याः शब्दादिलक्षणो भवति विषयस् तदनाकारत्वे त्व् अज्ञातस् तथा च कदाचिद् एव तदाकारतां दधती परिणामिनीति। प्रयोगश् च भवति --- बुद्धिः परिणामिनी ज्ञाताज्ञातविषयत्वाच् छ्रोत्रादिवद् इति। तद्वैधर्म्यं पुरुषस्य तद्विपरीताद् धेतोः सिध्यतीत्य् आह --- सदेति। स्याद् एतत्। सदाज्ञातविषयश् चेत् पुरुषो न तर्हि केवली स्याद् इत्य् आशयवान् पृच्छति --- कस्माद् इति। उत्तरम् --- न हि बुद्धिश् च नामेति। बुद्ध्यग्रहणयोर् अस्ति सहसंभवो निरोधावस्थायाम् अत उक्त विरोधसूचनाय पुरुषविषयश् चेति। तेनाद्यश् चकारो बुद्धिं विषयत्वेन समुच्चिनोति। परिशिष्टौ तु विरोधद्योतकौ चकाराव् इति। प्रयोगस् तु पुरुषोऽपरिणामी सदासंप्रज्ञातव्युत्थानावस्थयोर् ज्ञातविषयत्वात्। यस् तु परिणामी नासौ सदाज्ञातविषयो यथा श्रोत्रादिर् इति व्यतिरेकी हेतुः। अपरम् अपि वैधर्म्यम् आह --- किं च परार्थेति। बुद्धिः खलु क्लेशकर्मवासनादिभिर् विषयेन्द्रियादिभिश् च संहत्य पुरुषार्थम् अभिनिर्वर्तयन्ती परार्था। प्रयोगश् च परार्था बुद्धिः संहत्यकारित्वाच् छयनासनाभ्यङ्गवद् इति। पुरुषस् तु न तथेत्य् आह --- स्वार्थः पुरुष इति। सर्वं पुरुषाय कल्पते। पुरुषस् तु न कस्मैचिद् इत्य् अर्थः। वैधर्म्यान्तरम् आह --- सर्वेति। सर्वान् अर्थाञ् शान्तघोरमूढांस् तदाकारपरिणता बुद्धिर् अध्यवस्यति सत्त्वरजस्तमसां चैते परिणामा इति सिद्धा त्रिगुणा बुद्धिर् इति। न चैवं पुरुष इत्य् आह --- गुणानाम् इति। तत्प्रतिबिम्बितः पश्यति न तु तदाकारपरिणत इत्य् अर्थः। उपसंहरति --- अत इति। अस्तु तर्हि विरूप इति। नात्यन्तं विरूपः कस्माद् यतः शुद्धोऽपि प्रत्ययानुपश्यः। यथा चैतत् तथोक्तं "वृत्तिसारूप्यम् इतरत्र" [योगसूत्रम् 1.4] इत्य् अत्र। तथा चोक्तं पञ्चशिखेनापरिणामिनी हि भोक्तृशक्तिर् आत्मा। अत एव बुद्धाव् अप्रतिसंक्रमा च परिणामिनि बुद्धिरूपे ऽर्थे संक्रान्तेव तद्वृत्तिं बुद्धिवृत्तिम् अनुपतति। नन्व् असंक्रान्ता कथं संक्रान्तेव कथं वा वृत्तिं विनानुपततीत्य् अत आह --- तस्याश् चेति। प्राप्तश् चैतन्योपग्रह उपरागो येन रूपेण तत् तथा प्राप्तचैतन्योपग्रहं रूपं यस्याः सा तथोक्ता। एतद् उक्तं भवति --- यथा निर्मले जले ऽसंक्रान्तोऽपि चन्द्रमाः संक्रान्तप्रतिबिम्बतया संक्रान्त इव, एवम् अत्राप्य् असंक्रान्तापि संक्रान्तप्रतिबिम्बा चितिशक्तिः संक्रान्तेव। तेन बुद्ध्यात्मत्वम् आपन्ना बुद्धिवृत्तिम् अनुपततीति। तद् अनेनानुपश्य इति व्याख्यातं ताम् अनुकारेण पश्यतीत्य् अनुपश्य इति॥2.20॥

तदर्थ एव दृश्यस्यात्मा॥2.21॥

द्रष्टृदृश्ययोः स्वरूपम् उक्त्वा स्वस्वामिलक्षणसंबन्धाङ्गं दृश्यस्य द्रष्टृर्थत्वम् आह --- तदर्थ एव दृश्यस्यात्मा। व्याचष्टे --- दृशिरूपस्य पुरुषस्य भोक्तुः कर्मरूपतां भोग्यताम् आपन्नं दृश्यम् इति तस्मात् तदर्थ एव द्रष्टृर्थ एव दृश्यस्यात्मा भवति न तु दृश्यार्थः। ननु नात्मात्मार्थ इत्य् अत आह --- स्वरूपं भवतीति। एतद् उक्तं भवति --- सुखदुःखात्मकं दृश्यं भोग्यम्। सुखदुःखे चानुकूलयितृप्रतिकूलयितृणी तत्त्वेन तदर्थे एव व्यवतिष्ठेते। विषया अपि हि शब्दादयस् तादात्म्याद् एव चानुकूलयितारः प्रतिकूलयितारश् च। न चात्मैवैषाम् अनुकूलनीयः प्रतिकूलनीयश् च स्वात्मनि वृत्तिविरोधाद् अतः पारिशेष्याच् चितिशक्तिर् एवानुकूलनीया प्रतिकूलनीया च। तस्मात् तदर्थम् एव दृश्यं न तु दृश्यार्थम्। अतश् च तदर्थ एव दृश्यस्यात्मा न दृश्यार्थो यत् स्वरूपम् अस्य यावत् पुरुषार्थम् अनुवर्तते। निर्वर्तिते च पुरुषार्थे निवर्तत इत्य् आह --- स्वरूपम् इति। स्वरूपं तु दृश्यस्य जडं पररूपेणात्मरूपेण चैतन्येन प्रतिलब्धात्मकम् अनुभूतस्वरूपं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यते। भोगः सुखाद्याकारः शब्दाद्यनुभवो ऽपवर्गः सत्त्वपुरुषान्यतानुभवस् तच् चैतद् उभयम् अप्य् आजानतो जडाया बुद्धेः पुरुषच्छायापत्त्येति पुरुषस्यैव। तथा च पुरुषभोगापवर्गयोः कृतयोर् दृश्यस्य भोगापवर्गार्थता समाप्यत इति भोगापवर्गार्थतायां कृतायाम् इत्य् उक्तम्। अत्रान्तरे चोदयति --- स्वरूपहानाद् इति। परिहरति --- न तु विनश्यतीति॥2.21॥

कृतार्थं प्रति नष्टम् अप्य् अनष्टं तदन्यसाधारणत्वात्॥2.22॥

नन्व् अत्यन्तानुपलभ्यं कथं न विनश्यतीत्य् आशयवान् पृच्छति --- कस्माद् इति। सूत्रेणोत्तरम् आह --- कृतार्थं प्रति नष्टम् अप्य् अनष्टं तदन्यसाधारणत्वात्। कृतोऽर्थो यस्य पुरुषस्य स तथा। तं प्रति नष्टम् अप्य् अनष्टं तद् दृश्यं कुतः सर्वान् पुरुषान् कुशलान् अकुशलान् प्रति साधारणत्वात्। व्याचष्टे --- कृतार्थम् एकम् इति। नाशो ऽदर्शनम्। अनष्टं तु दृश्यम् अन्यपुरुषसाधारणत्वात्। तस्माद् दृश्यात् परस्यात्मनश् चैतन्यं रूपं तेन तद् इह श्रुतिस्मृतीतिहासपुराणप्रसिद्धम् अव्यक्तम् अनवयवम् एकम् अनाश्रयं व्यापि नित्यं विश्वकार्यशक्तिमत्। यद्य् अपि कुशलेन तं प्रति कृतकार्यं न दृश्यते तथाप्य् अकुशलेन दृश्यमानं न नास्ति। न हि रूपम् अन्धेन न दृश्यत इति चक्षुष्मतापि दृश्यमानम् अभावप्राप्तं भवति। न च प्रधानवद् एक एव पुरुषस् तन्नानात्वस्य जन्ममरणसुखदुःखोपभोगमुक्तिसंसारव्यवस्थया सिद्धेः। एकत्वश्रुतीनां च प्रमाणान्तरविरोधात् कथंचिद् देशकालविभागाभावेन भक्त्याप्य् उपपत्तेः। प्रकृत्येकत्वपुरुषनानात्वयोश् च श्रुत्यैव साक्षात् प्रतिपादनात्।

"अजाम् एकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्य् एको जुषमाणोऽनुशेते जहात्य् एनां भुक्तभोगाम् अजोऽन्यः" [तैत्तिरीयारण्यकम् 6.10] इति श्रुतिः।

अस्या एव श्रुतेश् चानेन सूत्रेणार्थोऽनूदित इति। यतो दृश्यं नष्टम् अप्य् अनष्टं पुरुषान्तरं प्रत्य् अस्ति अतो दृग्दर्शनशक्त्योर् नित्यत्वाद् अनादिः संयोगो व्याख्यातः। अत्रैवागमिनाम् अनुमतिम् आह --- तथा चोक्तम् इति। धर्मिणां गुणानाम् आत्मभिर् अनादिसंयोगाद् धर्ममात्राणां महदादीनाम् अप्य् अनादिः संयोग इति। एकैकस्य महदादेः संयोगोऽनादिर् अप्य् अनित्य एव यद्य् अपि तथापि सर्वेषां महदादीनां नित्यः पुरुषान्तराणां साधारणत्वाद् अत उक्तं धर्ममात्राणाम् इति। मात्रग्रहणेन व्याप्तिं गमयति। अत एतद् भवति --- यद्य् अप्य् एकस्य महतः संयोगोऽतीतताम् आपन्नस् तथापि महदन्तरस्य पुरुषान्तरेण संयोगो नातीत इति नित्य उक्तः॥2.22॥

स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः॥2.23॥

तद् एवं तादर्थ्ये संयोगकारण उक्ते प्रासङ्गिके प्रधाननित्यत्वे संयोगसामान्यनित्यत्वे हेतौ चोक्ते संयोगस्य यत् स्वरूपम् असाधारणो विशेष इति यावत् तदभिधित्सयेदं सूत्रं प्रववृते --- स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः। यतो दृश्यं तदर्थम् अतस् तज्जनितम् उपकारं भजमानः पुरुषस् तस्य स्वामी भवति। भवति च तद् दृश्यम् अस्य स्वं स चानयोः संयोगः शक्तिमात्रेण व्यवस्थितस् तत्स्वरूपोपलब्धिहेतुस् तद् एतद् भाष्यम् अवद्योतयति --- पुरुषः स्वामी योग्यतामात्रेण दृश्येन स्वेन योग्यतयैव दर्शनार्थं संयुक्तः। शेषं सुगमम्। स्याद् एतत्। द्रष्टुः स्वरूपोपलब्धिर् अपवृज्यतेऽनेनेत्य् अपवर्ग उक्तो न च मोक्षः साधनवांस् तथा सत्य् अयं मोक्षत्वाद् एव च्यवेतेत्य् अत आह --- दर्शनकार्यावसानो बुद्धिविशेषेण सह पुरुषविशेषस्य संयोग इति दर्शनं वियोगकारणम् उक्तम्। कथं पुनर् दर्शनकार्यावसानत्वं संयोगस्येत्य् अत आह --- दर्शनम् इति। ततः किम् इत्य् अत आह --- अदर्शनम् अविद्या संयोगनिमित्तम् इत्य् उक्तम्। उक्तम् अर्थं स्पष्टयति --- नात्रेति। ननु दर्शनम् अदर्शनं विरोधि निवर्तयतु बन्धस्य कुतो निवृत्तिर् इत्य् अत आह --- दर्शनस्येति। बुद्ध्यादिविविक्तस्यात्मनः स्वरूपावस्थानं मोक्ष उक्तो न तस्य साधनं दर्शनम् अपि त्व् अदर्शननिवृत्तेर् इत्य् अर्थः। असाधारणं संयोगहेतुम् अदर्शनविशेषं ग्रहीतुम् अदर्शनमात्रं विकल्पयति --- किं चेदम् इति। पर्युदासं गृहीत्वाह --- किं गुणानाम् अधिकारः कार्यारम्भणसामर्थ्यं ततो हि संयोगः संसारहेतुर् उपजायते। प्रसज्यप्रतिषेधं गृहीत्वा द्वितीयं विकल्पम् आह --- आहोस्विद् इति। दर्शितो विषयः शब्दादिः सत्त्वपुरुषान्यता च येन चित्तेन तस्य तद्विषयस्यानुत्पादः। एतद् एव स्फोरयति --- स्वस्मिन् दृश्ये शब्दादौ सत्त्वपुरुषान्यतायां चेति। तावद् एव प्रधानं विचेष्टते न यावद् द्विविधं दर्शनम् अभिनिर्वर्तयति। निष्पादितोभयदर्शनं तु निवर्तत इति। पर्युदास एव तृतीयं विकल्पम् आह --- किम् अर्थवत्ता गुणानाम्। सत्कार्यवादसिद्धौ हि भाविनाव् अपि भोगापवर्गार्थाव् अव्यपदेश्यतया स्त इत्य् अर्थः। पर्युदास एव चतुर्थं विकल्पम् आह --- अथाविद्या प्रतिसर्गकाले स्वचित्तेन सह निरुद्धा प्रधानसाम्यम् आगता वासनारूपेण स्वचित्तोत्पत्तिबीजम्। तेन दर्शनाद् अन्याविद्यावासनैवादर्शनम् उक्ता। पर्युदास एव पञ्चमं विकल्पम् आह --- किं स्थितिसंस्कारस्य प्रधानवर्तिनः साम्यपरिणामपरम्परावहिनः क्षये गतिर् महदादिविकारारम्भस् तद्धेतुः संस्कारः प्रधानस्य गतिसंस्कारस्

तस्याभिव्यक्तिः कार्योन्मुखत्वम्। तदुभयसंस्कारसद्भावे मतान्तरानुमतिम् आह --- यत्रेदम् उक्तम् अइकान्तिकत्वं व्यासेधद्भिः, प्रधीयते जन्यते विकारजातम् अनेनेति प्रधानं तच् चेत् स्थित्यैव वर्तेत न कदाचिद् गत्या ततो विकाराकरणान् न प्रधीयते तेन किंचिद् इत्य् अप्रधानं स्यात्। अथ गत्यैव वर्तेत न कदाचिद् अपि स्थित्या तत्राह --- तथा गत्यैवेति। क्वचित् पाठः "स्थित्यै गत्यै" इति। तादर्थ्ये चतुर्थी, एवकारश् च द्रष्टव्यः। स्थित्यै चेन् न वर्तेत न क्वचिद् विकारो विनश्येत्। तथा च भावस्य सतोऽविनाशिनो नोत्पत्तिर् अपीति विकारत्वाद् एव च्यवेत। एवं च न प्रधीयतेऽत्र किंचिद् इत्य् अप्रधानं स्यात् तद् उभयथा स्थित्या गत्या चास्य वृत्तिः प्रधानव्यवहारं लभते नान्यथैकान्ताभ्युपगमे। न केवलं प्रधाने कारणान्तरेष्व् अपि परब्रह्मतन्मायापरमाण्वादिषु कल्पितेषु समानश् चर्चो विचारः। तान्य् अपि हि स्थित्यैव वर्तमानानि विकाराकरणाद् अकारणानि स्युः, गत्यैव वर्तमानानि विकारनित्यत्वाद् अकारणानि स्युर् इति च। पर्युदास एव षष्ठं विकल्पम् आह --- दर्शनशक्तिर् एवेति। यथा प्रजापतिव्रते नेक्षेतोद्यन्तम् आदित्यम् इत्य् अनीक्षणप्रत्यासन्नः संकल्पो गृह्यत एवम् इहापि दर्शननिषेधे तत्प्रत्यासन्ना तन्मूला शक्तिर् उच्यते। सा च दर्शनं भोगादिलक्षणं प्रसोतुं द्रष्टारं दृश्येन योजयतीति। अत्रैव श्रुतिम् आह --- प्रधानस्येति। स्याद् एतत्। आत्मख्यापनार्थं प्रधानं प्रवर्तत इति श्रुतिर् आह न त्व् आत्मदर्शनशक्तेः प्रवर्तत इत्य् अत आह --- सर्वबोध्यबोधसमर्थ इति। प्राक् प्रवृत्तेः प्रधानस्य नात्मख्यापनमात्रं प्रवृत्तौ प्रयोजकम् असामर्थ्ये तदयोगात् तस्मात् सामर्थ्यं प्रवृत्तेः प्रयोजकम् इति श्रुत्यार्थाद् उक्तम् इत्य् अर्थः। दर्शनशक्तिः प्रधानाश्रयेत्य् अङ्गीकृत्य षष्ठः कल्पः। इमाम् एवोभयाश्रयाम् आस्थाय सप्तमं विकल्पम् आह --- उभयस्य पुरुषस्य च दृश्यस्य चादर्शनं दर्शनशक्तिर् धर्म इत्य् एके। स्याद् एतन् मृष्यामहे दृश्यस्येति, तस्य सर्वशक्त्याश्रयत्वान् न द्रष्टुर् इति पुनर् मृष्यामः। न हि तदाधारा ज्ञानशक्तिस् तत्र ज्ञानस्यासमवायाद् अन्यथा परिणामापत्तिर् इत्य् अत आह --- तत्रेदम् इति। भवतु दृश्यात्मकं तथापि तस्य जडत्वेन तद्गतशक्तिकार्यं दर्शनम् अपि जडम् इति न शक्यं तद्धर्मत्वेन विज्ञातुं जडस्य स्वयम् अप्रकाशत्वाद् अतो दृशेर् आत्मनः प्रत्ययं चैतन्यच्छायापत्तिम् अपेक्ष्य दर्शनं तद्धर्मत्वेन भवति ज्ञायते विषयेण विषयिणो लक्षणात्। नन्व् एतावतापि दृश्यधर्मत्वम् अस्य ज्ञानस्य भवति न तु पुरुषधर्मत्वम् अपीत्य् अत आह --- तथा पुरुषस्येति। सत्यं पुरुषस्यानात्मभूतम् एव तथापि दृश्यबुद्धिसत्त्वस्य यः प्रत्ययश् चैतन्यच्छायापत्तिस् तम् अपेक्ष्य पुरुषधर्मत्वेनेव न तु पुरुषधर्मत्वेन। एतद् उक्तं भवति --- चैतन्यबिम्बोद्ग्राहितया बुद्धिचैतन्ययोर् अभेदाद् बुद्धिधर्माश् चैतन्यधर्मा इव चकासतईति। अष्टमं विकल्पम् आह --- दर्शनं ज्ञानम् एव शब्दादीनाम् अदर्शनं न तु सत्त्वपुरुषान्यताया इति केचित्। यथा चक्षू रूपे प्रमाणम् अपि रसादाव् अप्रमाणम् उच्यते। एतद् उक्तं भवति --- सुखाद्याकारशब्दादिज्ञानानि स्वसिद्ध्यनुगुणतया द्रष्टृदृश्यसंयोगम् आक्षिपन्तीति। तद् एवं विकल्प्य चतुर्थं विकल्पं स्वीकर्तुम् इतरेषां विकल्पानां सांख्यशास्त्रगतानां सर्वपुरुषसाधारण्येन भोगवैचित्र्याभावप्रसङ्गेन दूषयति --- इत्य् एते शास्त्रगता इति॥2.23॥

तस्य हेतुर् अविद्या॥2.24॥

चतुर्थं विकल्पं निर्धारयितुं सूत्रम् अवतारयति --- यस् तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोग इति। प्रतीपम् अञ्चति प्राप्नोतीति प्रत्यग् असाधारणस् तु संयोग एकैकस्य पुरुषस्यैकैकया बुद्ध्या वैचित्र्यहेतुः। सूत्रं पठति --- तस्येति। नन्व् अविद्या विपर्ययज्ञानं तस्य भोगापवर्गयोर् इव स्वबुद्धिसंयोगो हेतुः। असंयुक्तायां बुद्धौ तदनुत्पत्तेस् तत् कथम् अविद्या संयोगभेदस्य हेतुर् इत्य् अत आह --- विपर्ययज्ञानवासनेति। सर्गान्तरीयाया अविद्यायाः स्वचित्तेन सह निरुद्धाया अपि प्रधानेऽस्ति वासना तद्वासनावासितं च प्रधानं तत्तत्पुरुषसंयोगिनीं तादृशीम् एव बुद्धिं सृजति। एवं पूर्वपूर्वसर्गेष्व् इत्य् अनादित्वाद् अदोषः। अत एव प्रतिसर्गावस्थायां न पुरुषो मुच्यत इत्य् आह --- विपर्ययज्ञानेति। यदा पुरुषख्यातिं कार्यनिष्ठां प्राप्ता तदा विपर्ययज्ञानवासनाया बन्धकारणस्याभावान् न पुनर् आवर्तत इत्य् आह --- सा त्व् इति। अत्र कश्चिन् नास्तिकः कैवल्यं पण्डकोपाख्यानेनोपहसति। पण्डकोपाख्यानम् आह --- मुग्धयेति। किमर्थम् इत्य् अर्थशब्दो निमित्तम् उपलक्षयति प्रयोजनस्यापि निमित्तत्वात्। पण्डकोपाख्यानेन साम्यम् आपादयति --- तथेदं विद्यमानं गुणपुरुषान्यताज्ञानं चित्तनिवृत्तिं न करोति, परवैराग्येण ज्ञानप्रसादमात्रेण ससंस्कारं निरुद्धं विनष्टं करिष्यतीति का प्रत्याशा। यस्मिन् सत्य् एव यद् भवति तत् तस्य कार्यम्। न तु यस्मिन्न् असतीति भावः। अत्रैकदेशिमतेन परिहारम् आह --- तत्रेति। ईषदपरिसमाप्त आचार्य आचार्यदेशीयः। आचार्यस् तु वायुप्रोक्ते कृतलक्षणः ---

"आचिनोति च शास्त्रार्थम् आचारे स्थापयत्य् अपि। स्वयम् आचरते यस्माद् आचार्यस् तेन चोच्यते" [वायुपुराणम् 59.30] इति।

भोगविवेकख्यातिरूपपरिणतबुद्धिनिवृत्तिर् एव मोक्षः। न च बुद्धिस्वरूपनिवृत्तिः। सा च धर्ममेघान्तविवेकख्यातिप्रतिष्ठाया अनन्तरम् एव भवति सत्य् अपि बुद्धिस्वरूपमात्रावस्थान इत्य् अर्थः। एतद् एव स्फोरयति --- अदर्शनस्य बन्धकारणस्याभावाद् बुद्धिनिवृत्तिः। तच् चादर्शनं बन्धकारणं दर्शनान् निवर्तते। दर्शननिवृत्तिस् तु परवैराग्यसाध्या। सत्य् अपि बुद्धिस्वरूपावस्थाने मोक्ष इति भावः। एकदेशिमतम् उपन्यस्य स्वमतम् आह --- तत्र चित्तनिवृत्तिर् एव मोक्षः। ननूक्तं दर्शने निवृत्तेऽचिराच् चित्तस्वरूपनिवृत्तिर् भवतीति कथं दर्शनकार्येत्य् अत आह --- किमर्थम् अस्थाने मतिविभ्रम इति। अयम् अभिसंधिः --- यदि दर्शनस्य साक्षाच् चित्तनिवृत्तौ कारणभावम् अङ्गीकुर्वीमहि तत एवम् उपालभ्येमहि। किं तु विवेकदर्शनं प्रकर्षकाष्ठां प्राप्तं निरोधसमाधिभावनाप्रकर्षक्रमेण चित्तनिवृत्तिमत्पुरुषस्वरूपावस्थानोपयोगीत्य् आतिष्ठामहे तत् कथम् उपालभ्येमहीति॥2.24॥

तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम्॥2.25॥

तद् एवं व्यूहद्वयम् उक्त्वा तृतीयव्यूहाभिधानाय सूत्रम् अवतारय्ति --- हेयं दुःखम् इति। तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम्। व्याचष्टे --- तस्येति। अस्ति हि महाप्रलयेऽपि संयोगाभावोऽत उक्तम् आत्यन्तिक इति। दुःखोपरमो हानम् इति पुरुषार्थता दर्शिता। शेषम्

अतिरोहितम्॥2.25॥

विवेकख्यातिर् अविप्लवा हानोपायः॥2.26॥

हानोपायलक्षणं चतुर्थं व्यूहम् आख्यातुं सूत्रम् अवतारयति --- अथेति। विवेकख्यातिर् अविप्लवा हानोपायः। आगमानुमानाभ्याम् अपि विवेकख्यातिर् अस्ति। न चासौ व्युत्थानं तत्संस्कारं वा निवर्तयति तद्वतोऽपि तदनुवृत्तेर् इति तन्निवृत्त्यर्थम् अविप्लवेति। विप्लवो मिथ्याज्ञानं तद्रहिता। एतद् उक्तं भवति --- श्रुतमयेन ज्ञानेन विवेकं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य दीर्घकालनैरन्तर्यसत्कारासेविताया भावनायाः प्रकर्षपर्यन्तं समधिगता साक्षात्कारवती विवेकख्यातिर् निवर्तितसवासनमिथ्याज्ञाना निर्विप्लवा हानोपाय इति। शेषं सुगमं भाष्यम्॥2.26॥

तस्य सप्तधा प्रान्तभूमिः प्रज्ञा॥2.27॥

विवेकख्यातिनिष्ठायाः स्वरूपम् आह सूत्रेण --- तस्य सप्तधा प्रान्तभूमिः प्रज्ञा। व्याचष्टे --- तस्येति प्रत्युदितख्यातेर् वर्तमानख्यातेर् योगिनः प्रत्याम्नायः परामर्शः। अशुद्धिर् एवावरणं चित्तसत्त्वस्य तद् एव मलं तस्यापगमाच् चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे निर्विप्लवविवेकख्यातिनिष्ठाम् आपन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति। विषयभेदात् प्रज्ञाभेदः। प्रकृष्टो ऽन्तो यासां भूमीनाम् अवस्थानां तास् तथोक्ताः। यतः परं नास्ति स प्रकर्षः। प्रान्ता भूमयो यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता। ता एव सप्तप्रकाराः प्रान्तभूमीर् उदाहरति --- तद्यथेति। तत्र पुरुषप्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमाम् उदाहरति --- परिज्ञातं हेयम्। यावत् किल प्राधानिकं तत् सर्वं परिणामतापसंस्कारैर् गुणवृत्तिविरोधाद् दुःखम् एवेति हेयं तत् परिज्ञातम्। प्रान्ततां दर्शयति --- नास्य पुनः किंचिद् अपरिज्ञातं परिज्ञेयम् अस्ति। द्वितीयाम् आह --- क्षीणा इति। प्रान्तताम् आह --- न पुनर् इति। तृतीयाम् आह --- साक्षात्कृतं प्रत्यक्षेण निश्चितं मया संप्रज्ञातावस्थायाम् एव निरोधसमाधिसाध्यं हानं, न पुनर् अस्याः परं निश्चेतव्यम् अस्तीति शेषः। चतुर्थीम् आह --- भावितो निष्पादितो विवेकख्यातिरूपो हानोपायो नास्याः परं भावनीयम् अस्तीति शेषः। एषा चतुष्टयी कार्या विमुक्तिः समाप्तिः, कार्यतया प्रयत्नव्याप्यता दर्शिता। क्वचित् पाठः कार्यविमुक्तिर् इति। कार्यान्तरेण विमुक्तिः प्रज्ञाया इत्य् अर्थः। प्रयत्ननिष्पाद्यानुनिष्पादनीयाम् अप्रयत्नसाध्यां चित्तविमुक्तिम् आह --- चित्तविमुक्तिस् तु त्रयी। प्रथमाम् आह --- चरिताधिकारा बुद्धिः। कृतभोगापवर्गकार्येत्य् अर्थः। द्वितीयाम् आह --- गुणा इति। प्रान्तताम् आह --- न चैषाम् इति। तृतीयाम् आह --- एतस्याम् अवस्थायाम् इति। एतस्याम् अवस्थायां जीवन्न् एव पुरुषः कुशलो मुक्त इत्य् उच्यते चरमदेहत्वाद् इत्य् आह --- एताम् इति। अनौपचारिकं मुक्तम् आह --- प्रतिप्रसवे प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्य् एव भवति गुणातीतत्वाद् इति॥ 2.27॥

योगाङ्गानुष्ठानाद् अशुद्धिक्षये ज्ञानदीप्तिर् आ विवेकख्यातेः॥2.28॥

तद् एवं चतुरो व्यूहान् उक्त्वा तन्मध्यपतितस्य हानोपायस्य विवेकख्यातेर् गोदोहनादिवत् प्रागसिद्धेर् असिद्धस्य चोपायत्वाभावात् सिद्ध्युपायान् वक्तुम् आरभत इत्य् आह --- सिद्धेति। तत्राभिधास्यमानानां साधनानां येन प्रकारेण विवेकख्यात्युपायत्वं तद् दर्शयति सूत्रेण --- योगाङ्गानुष्ठाणाद् अशुद्धिक्षये ज्ञानदीप्तिर् आ विवेकख्यातेः। योगाङ्गानि हि यथायोगं दृष्टादृष्टद्वारेणाशुद्धिं क्षिण्वन्ति। पञ्चपर्वणो विपर्ययस्येत्य् उपलक्षणं पुण्यापुण्ययोर् अपि जात्यायुर्भोगहेतुत्वेनाशुद्धिरूपत्वाद् इति। शेषं सुगमम्। नानाविधस्य कारणभावस्य दर्शनाद् योगाङ्गानुष्ठानस्य कीदृशं कारणत्वम् इत्य् अत आह --- योगाङ्गानुष्ठानम् इति। अशुद्ध्या वियोजयति बुद्धिसत्त्वम् इत्य् अशुद्धेर् वियोगकारणम्। दृष्टान्तम् आह --- यथा परशुर् इति। परशुश् छेद्यं वृक्षं मूलेन वियोजयति। अशुद्ध्या वियोजयद् बुद्धिसत्त्वं विवेकख्यातिं प्रापयति यथा धर्मः सुखम्। तथा योगाङ्गानुष्ठानं विवेकख्यातेः प्राप्तिकारणं नान्येन प्रकारेणेत्य् आह --- विवेकख्यातेस् त्व् इति। नान्यथेति प्रतिषेधश्रवणात् पृच्छति --- कति चैतानीति। उत्तरम् --- नवैवेति। तानि दर्शयति कारिकया --- तद्यथा --- उत्पत्तीति। अत्रोदाहरणान्य् आह --- तत्रोत्पत्तिकारणम् इति। मनो हि विज्ञानम् अव्यपदेश्यावस्थातोऽपनीय वर्तमानावस्थाम् आपादयद् उत्पत्तिकारणं विज्ञानस्य। स्थितिकारणं मनसः पुरुषार्थता। अस्मिताया उत्पन्नं मनस् तावद् अवतिष्ठते न यावद् द्विविधं पुरुषार्थम् अभिनिर्वर्तयति। अथ निर्वर्तितपुरुषार्थद्वयं स्थितेर् अपैति। तस्मात् स्वकारणाद् उत्पन्नस्य मनसोऽनागतपुरुषार्थता स्थितिकारणम्। दृष्टान्तम् आह --- शरीरस्येवेति। प्रत्यक्षज्ञाननिमित्तम् इन्द्रियद्वारा वा स्वतो वा विषयस्य संस्क्रियाभिव्यक्तिस् तस्याः कारणं यथा रूपस्यालोकः। विकारकारणं मनसो विषयान्तरम्। यथा हि मृकण्डोः समाहितमनसो वल्लकीविपञ्च्यमानपञ्चमस्वरश्रवणसमनन्तरम् उन्मीलिताक्षस्य स्वरूपलावण्ययौवनसंपन्नाम् अप्सरसं प्रम्लोचाम् ईक्षमाणस्य समाधिम् अपहाय तस्यां सक्तं मनो बभूवेति। अत्रैव निदर्शनम् आह --- यथाग्निः पाक्यस्य तण्डुलादेः कठिनावयवसंनिवेशस्य प्रशिथिलावयवसंयोगलक्षणस्य विकारस्य कारणम्। सत एव विषयस्य प्रत्ययकारणं धूमज्ञानम् अग्निज्ञानस्येति। ज्ञायत इति ज्ञानम् अग्निश् चासौ ज्ञानं चेत्य् अग्निज्ञानं तस्य। एतद् उक्तं भवति --- वर्तमानस्यैवाग्नेर् ज्ञेयस्य प्रत्ययकारणतया कारणम् इति। अउत्सर्गिकी निरपेक्षाणां कारणानां कार्यक्रिया प्राप्तिस् तस्याः कुतश्चिद् अपवादो ऽप्राप्तिः। यथा निम्नोपसर्पणस्वभावानाम् अपां प्रतिबन्धः सेतुना तथेहापि बुद्धिसत्त्वस्य सुखप्रकाशशीलस्य स्वाभाविकी सुखविवेकख्यातिजनकता प्राप्तिः। सा कुतश्चिद् अधर्मात् तमसो वा प्रतिबन्धान् न भवति। धर्माद् योगाङ्गानुष्ठानाद् वा तदपनये तदप्रतिबद्धवृत्तिस्वभावत एव तज्जनकतया तद् आप्नोति। यथा वक्ष्यति --- "निमित्तम् अप्रयोजकं प्रकृतीनां वरणभेदस् तु ततः क्षेत्रिकवत्" [योगसूत्रम् 4.3] इति। तद् एवं विवेकख्यातिलक्षणकार्यापेक्षया प्राप्तिकारणम् उक्तम्। अवान्तरकार्यापेक्षया तु तद् एव वियोगकारणम् इत्य् आह --- वियोगकारणम् इति। अन्यत्वकारणम् आह --- अन्यत्वकारणं यथा सुवर्णकारः सुवर्णस्य,

कटककुण्डलकेयूरादिभ्यो भिन्नाभिन्नस्य भेदविवक्षया कटकादिभिन्नस्याभेदविवक्षया कटकाद्यभिन्नस्य सुवर्णस्य कुण्डलाद् अन्यत्वम्। तथा च कटककारी सुवर्णकारः कुण्डलाद् अभिन्नात् सुवर्णाद् अन्यत् कुर्वन्न् अन्यत्वकारणम्। अग्निर् अपि पाक्यस्यान्यत्वकारणं यद्य् अपि तथापि धर्मिणो धर्मयोः पुलाकत्वतण्डुलत्वयोर् भेदाविवक्षया धर्मयोर् उपजनापायेऽपि धर्म्यनुवर्तत इति न तस्यान्यत्वं शक्यं वक्तुम् इति विकारमात्रकारणत्वम् उक्तम् इति न संकरः। न च संस्थानभेदो धर्मिणो ऽन्यत्वकारणम् इति व्याख्येयम्। सुवर्णकार इत्य् अस्यासंगतेः। बाह्यम् अन्यत्वकारणम् उपन्यस्याध्यात्मिकम् उदाहरति --- एवम् एकस्येति। अविद्या कमनीयेयं कन्यकेत्यादिज्ञानम्। तन्मोहयोगात् स एव स्त्रीप्रत्ययो मूढो विषण्णो भवति चैत्रस्य मैत्रस्य पुण्यवतो बत कलत्ररत्नम् एतन् न तु मम भाग्यहीनस्येति। एवं सपत्नीजनस्य तस्यां द्वेषः स्त्रीप्रत्ययस्य दुःखत्वे। एवं मैत्रस्य तस्या भर्तू रागस् तस्यैव स्त्रीप्रत्ययस्य सुखत्वे। तत्त्वज्ञानं त्वङ्मांसमेदोऽस्थिमज्जासमूहः स्त्रीकायः स्थानबीजादिभिर् अशुचिर् इति विवेकिनां माध्यस्थ्ये वैराग्ये कारणम् इति। धृतिकारणं शरीरम् इन्द्रियाणां विधारकम् इन्द्रियाणि च शरीरस्य सामान्या करणवृत्तिर् हि प्राणाद्या वायवः पञ्च तदभावे शरीरपातात्। एवं मांसादिकायाङ्गानाम् अपि परस्परविधार्यविधारकत्वम्। एवं महाभूतानि पृथिव्यादीनि मनुष्यवरुणसूर्यगन्धवहशशिलोकनिवासिनां शरीराणां, तानि च परस्परं, पृथिव्यां हि गन्धरसरूपस्पर्शशब्दगुणायां पञ्च महाभूतानि परस्परं विधार्यविधारकभावेनावस्थितान्य् अप्सु चत्वारि तेजसि त्रीणि द्वे च मातरिश्वनीति। तैर्यग्यौनमानुषदैवतादीनि च विधार्यविधारकभावेनावस्थितानि। नन्व् आधाराधेयभावरहितानां कुतस् तत्त्वम् इत्य् अत आह --- परस्परार्थत्वाद् इति। मनुष्यशरीरं हि पशुपक्षिमृगसरीसृपस्थावरशरीरोपयोगेन ध्रियते। एवं व्याघ्रादिशरीरम् अपि मनुष्यपशुमृगादिशरीरोपयोगेन। एवं पशुमृगादिशरीरम् अपि स्थावराद्युपयोगेन। एवं दैवशरीरम् अपि मनुष्योपहृतच्छागमृगकपिञ्जलमांसाज्यपुरोडाशसहकारशाखाप्रस्तरादिभिर् इज्यमानं तदुपयोगेन। एवं देवतापि वरदानवृष्ट्यादिभिर् मनुष्यादीनि धारयतीत्य् अस्ति परस्परार्थत्वम् इत्य् अर्थः। शेषं सुगमम्॥2.28॥

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो ऽष्टाव् अङ्गानि॥2.29॥

संप्रति न्यूनाधिकसंख्याव्यवच्छेदार्थं योगाङ्गान्य् अवधारयति --- तत्र योगाङ्गान्य् अवधार्यन्त इति। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो ऽष्टाव् अङ्गानि। अभ्यासवैराग्यश्रद्धावीर्यादयो ऽपि यथायोगम् एतेष्व् एव स्वरूपतो नान्तरीयकतया चान्तर्भावयितव्याः॥2.29॥

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः॥2.30॥

यमनियमाद्यङ्गान्य् उद्दिश्य यमनिर्देशकं सूत्रम् अवतारयति --- तत्रेति। अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः। योगाङ्गम् अहिंसाम् आह --- सर्वथेति। ईदृशीम् अहिंसां स्तौति --- उत्तरे चेति। तन्मूला इत्य् अहिंसाम् अपरिपाल्य कृता अप्य् अकृतकल्पा निष्फलत्वाद् इत्य् अर्थः। तत्सिद्धिपरतयैवानुष्ठानम्। अहिंसा चेन् मूलम् उत्तरेषां कथं तेऽहिंसासिद्धिपरा इत्य् अत आह --- तत्प्रतिपादनायेति। सिद्धिर् ज्ञानं नोत्पत्तिर् इत्य् अर्थः। स्याद् एतत्। अहिंसाज्ञानार्था यद्य् उत्तरे कृतं तैर् अन्यत एव तदवगमाद् इत्य् अत आह --- तदवदातेति। यद्य् उत्तरे नानुष्ठीयेरन्न् अहिंसा मलिना स्याद् असत्यादिभिर् इत्य् अर्थः। अत्रैवागमिकानां संमतिम् आह --- तथा चेति। सुगमम्। सत्यलक्षणम् आह --- यथार्थे वाङ्मनसे इति। यथाशब्दं साकाङ्क्षं पूरयति --- यथा दृष्टम् इति। प्रतिसंबन्धिनं तथाशब्दं प्रतिक्षिपति --- तथा वाङ्मनश् च विवक्षायां कर्तव्यायाम् इति। अन्यथा तु न सत्यम् एतत् सोपपत्तिकम् आह --- परत्र पुरुषे स्वबोधसंक्रान्तये स्वबोधसदृशबोधजननाय वाग् उक्तोच्चारिता, अतः सा यदि न वञ्चिता वञ्चिका यथा द्रोणाचार्येण स्वतनयाश्वत्थाममरणम् आयुष्मन् सत्यधनाश्वत्थामा हत इति पृष्टस्य युधिष्ठिरस्य प्रतिवचनं हस्तिनम् अभिसंधाय सत्यं हतोऽश्वत्थामेति, तद् इदम् उक्तस्योत्तरं न युधिष्ठिरस्य स्वबोधं संक्रामयति --- स्वबोधो ह्य् अस्य हस्तिहननविषय इन्द्रियजन्मा, न चासौ संक्रान्तः किं त्व् अन्य एव तस्य तनयवधबोधो जात इति। भ्रान्ता वा भ्रान्तिजा वा, भ्रान्तिश् च विवक्षासमये वा ज्ञेयार्थावधारणसमये वा। प्रतिपत्त्या वन्ध्या प्रतिपत्तिवन्ध्या यथार्थान् प्रति म्लेच्छभाषा प्रतिपत्तिवन्ध्या, निष्प्रयोजना वा स्याद् इति यथानपेक्षिताभिधाना वाक् तत्र हि परत्र स्वबोधस्य संक्रान्तिर् अप्य् असंक्रान्तिर् एव निष्प्रयोजनत्वाद् इति। एवंलक्षणम् अपि सत्यं परापकारफलं सत्याभासं न तु सत्यम् इत्य् आह --- एषेति। तद्यथा सत्यतपसस् तस्करैः सार्थगमनं पृष्टस्य सार्थगमनाभिधानम् इति। अभिधीयमानोच्चार्यमाणा। शेषं सुगमम्। अभावस्य भावाधीननिरूपणतया स्तेयलक्षणम् आह --- स्तेयम् अशास्त्रपूर्वकम् इति। विशेषेण सामान्यं लक्ष्यत इत्य् अर्थः। मानसव्यापारपूर्वकत्वाद् वाचनिककायिकव्यापारयोः प्राधान्यान् मनोव्यापार उक्तोऽस्पृहारूपम् इति। ब्रह्मचर्यस्वरूपम् आह --- गुप्तेति। संयतोपस्थोऽपि हि स्त्रीप्रेक्षणतदालापकन्दर्पायतनतदङ्गस्पर्शनसक्तो न ब्रह्मचर्यवान् इति तन्निरासायोक्तं गुप्तेन्द्रियस्येति। इन्द्रियान्तराण्य् अपि तत्र लोलुपानि रक्षणीयानीति। अपरिग्रहस्वरूपम् आह --- विषयाणाम् इति। तत्र सङ्गदोष उक्तो भोगाभ्यासम् अनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणाम् इति, हिंसालक्षणश् च दोषो नानुपहत्य भूतान्य् उपभोगः संभवतीति। अशास्त्रीयाणाम् अयत्नोपनतानाम् अपि विषयाणां निन्दितप्रतिग्रहादिरूपार्जनदोषदर्शनाच् छास्त्रीयाणाम् अप्य् उपार्जितानां च रक्षणादिदोषदर्शनाद् अस्वीकरणम् अपरिग्रहः॥2.30॥

जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्॥2.31॥

सामान्यत उक्ता यादृशाः पुनर् योगिनाम् उपादेयास् तादृशान् वक्तुं सूत्रम् अवतारयति --- ते त्व् इति। जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्। सर्वासु जात्यादिलक्षणासु भूमिषु विदिताः सार्वभौमाः। अहिंसादय इत्य् अन्यत्राप्य् अवच्छेद ऊहनीयः। सुगमं भाष्यम्॥2.31॥

शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः॥2.32॥

शौचादिनियमान् आचष्टे --- शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः। व्याचष्टे --- शौचम् इति। आदिशब्देन गोमयादयो गृह्यन्ते। गोमूत्रयावकादि मेध्यं तस्याभ्यवहरणादि। आदिशब्दाद् ग्रासपरिमाणसंख्यानियमादयो ग्राह्याः। मेध्याभ्यवहरणादिजनितम् इति वक्तव्ये मेध्याभ्यवहरणादि चेत्य् उक्तं कार्ये कारणोपचारात्। चित्तमला मदमानासूयादयस् तदपनयो मनःशौचम्। प्राणत्राणमात्रहेतोर् अभ्यधिकस्यानुपादित्सा संतोषः प्राग् एव स्वीकरणपरित्यागाद् इति शेषः। काष्ठमौनम् इङ्गितेनापि स्वाभिप्रायाप्रकाशनम्। अवचनमात्रम् आकारमौनम्। परिक्षीणवितर्कजाल इति वितर्को वक्ष्यमाणः संशयविपर्ययौ वेति। एतावता शुद्धोऽभिसंधिर् उक्तः। एते च यमनियमा विष्णुपुराण उक्ताः ---

"ब्रह्मचर्यम् अहिंसां च सत्यास्तेयापरिग्रहान्। सेवेत योगी निष्कामो योग्यतां स्वमनो नयन्॥ स्वाध्यायशौचसंतोषतपांसि नियतात्मवान्। कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः॥ एते यमाः सनियमाः पञ्च पञ्च प्रकीर्तिताः। विशिष्टफलदाः काम्या निष्कामानां (निष्कामाणां) विमुक्तिदाः" [ 6.7.36--38] इति॥2.32॥

वितर्कबाधने प्रतिपक्षभावनम्॥2.33॥

"श्रेयांसि बहुविघ्नानि" इत्य् एषाम् अपवादसंभवे तत्प्रतीकारोपदेशपरं सूत्रम् अवतारयति --- एतेषां यमनियमानाम् इति। सूत्रं --- वितर्कबाधने प्रतिपक्षभावनम्। वितर्काणां भाष्ये नास्ति तिरोहितम् इव किंचन॥2.33॥

वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्॥2.34॥

तत्र वितर्काणां स्वरूपप्रकारकारणधर्मफलभेदान् प्रतिपक्षभावानाविषयान् प्रतिपक्षभावनास्वरूपाभिधित्सया सूत्रेणाह --- वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्। व्याचष्टे --- तत्र हिंसेति। प्राणभृद्भेदस्यापरिसंख्येयत्वान् नियमविकल्पसमुच्चयाः संभविनो हिंसादिषु। तत्राधर्मतस् तमःसमुद्रेके सति चतुर्विधविपर्ययलक्षणस्याज्ञानस्याप्य् उदय इत्य् अज्ञानफलत्वम् अप्य् एतेषाम् इति। दुःखाज्ञानानन्तफलत्वम् एव हि प्रतिपक्षभावनं तद्वशाद् एभ्यो निवृत्तेर् इति। तद् एव प्रतिपक्षभावनं स्फोरयति --- वध्यस्य पश्वादेर् वीर्यं प्रयत्नं कायव्यापारहेतुं प्रथमम् आक्षिपति यूपनियोजनेन। तेन हि पशोर् अप्रागल्भ्यं भवति। शेषम् अतिस्फुटम्॥2.34॥

अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः॥2.35॥

उक्ता यमनियमास् तदपवादकानां च वितर्काणां प्रतिपक्षभावनातो हानिर् उक्ता, संप्रत्य् अप्रत्यूहं यमनियमाभ्यासात् तत्सिद्धिपरिज्ञानसूचकानि चिह्नान्य् उपन्यस्यति यत्परिज्ञानाद् योगी तत्र तत्र कृतकृत्यः कर्तव्येषु प्रवर्तत इत्य् आह (ति) --- यदेति (प्रतिपक्षेति)। अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः। शाश्वतिकविरोधा अप्य् अश्वमहिषमूषकमार्जाराहिनकुलादयो ऽपि भगवतः प्रतिष्ठिताहिंसस्य संनिधानात् तच्चित्तानुकारिणो वैरं परित्यजन्तीति॥2.35॥

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्॥2.36॥

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्। क्रियासाध्यौ धर्माधर्मौ क्रिया तत्फलं च स्वर्गनरकादि ते एवाश्रयतीत्य् आश्रयस् तस्य भावस् तत्त्वं तद् अस्य भगवतो वाचो भवतीति। क्रियाश्रयत्वम् आह --- धार्मिक इति। फलाश्रयत्वम् आह --- स्वर्गम् इति। अमोघाप्रतिहता॥2.36॥

अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्॥2.37॥

अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्। सुबोधम्॥2.37॥

ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः॥2.38॥

ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः। वीर्यं सामर्थ्यं यस्य लाभाद् अप्रतिघान् अप्रतिघातान् गुणान् अणिमादीन् उत्कर्षयत्य् उपचिनोति। सिद्धश् च तारादिभिर् (तर्कादिभिर्) अष्टाभिः सिद्धिभिर् ऊहाद्यपरनामभिर् उपेतो विनेयेषु शिष्येषु ज्ञानं योगतदङ्गविषयम् आधातुं समर्थो भवतीति॥ 2.38॥

अपरिग्रहस्थैर् ये जन्मकथंतासंबोधः॥2.39॥

अपरिग्रहस्थैर् ये जन्मकथंतासंबोधः। निकायविशिष्टैर् देहेन्द्रियादिभिर् अभिसंबन्धो जन्म तस्य कथंता किंप्रकारता तस्याः संबोधः साक्षात्कारः सप्रकारातीन्द्रियशान्तोदिताव्यपदेश्यजन्मपरिज्ञानम् इति यावत्। अतीतं जिज्ञासते --- कोऽहम् आसम् इति। तस्यैव प्रकारभेदम् उत्पादे स्थितौ च जिज्ञासते --- कथम् अहम् आसम् इति। वर्तमानस्य जन्मनः स्वरूपं जिज्ञासते --- किं स्विद् इति। शरीरं भौतिकं किं भूतानां समूहमात्रम् आहोस्वित् तेभ्योऽन्यद् इति। अत्रापि कथं स्विद् इत्य् अनुषञ्जनीयम्। क्वचित् तु पठ्यत एव। अनागतं जिज्ञासते --- के वा भविष्याम इति। अत्रापि कथं स्विद् इत्य् अनुषङ्गः। एवम् अस्येति। पूर्वान्तोऽतीतः कालः परान्तो भविष्यन् मध्यो वर्तमानस् तेष्व् आत्मनो भावः शरीरादिसंबन्धस् तस्मिञ् जिज्ञासा ततश् च ज्ञानं, यो हि यद् इच्छति स तत् करोतीति न्यायात्॥2.39॥

शौचात् स्वाङ्गजुगुप्सा परैर् असंसर्गः॥2.40॥

शौचात् स्वाङ्गजुगुप्सा परैर् असंसर्गः। अनेन बाह्यशौचसिद्धिसूचकं कथितम्॥2.40॥

सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च॥2.41॥

आन्तरशौचसिद्धिसूचकम् आह --- किं चेति। सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च। चित्तमलानाम् आक्षालने चित्तसत्त्वम् अमलं प्रादुर्भवति वैमल्यात् सौमनस्यं स्वच्छता स्वच्छं तदेकाग्रं ततो मनस्तन्त्राणाम् इन्द्रियाणां तज्जयाज् जयस् तत आत्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीति॥2.41॥

संतोषाद् अनुत्तमः सुखलाभः॥2.42॥

संतोषाद् अनुत्तमः सुखलाभः। न विद्यतेऽस्माद् उत्तम इत्य् अनुत्त्मः। यथा चोक्तं ययातिना पूरौ यौवनम् अर्पयता ---

"या दुस्त्यजा दुर्मतिभिर् या न जीर्यति जीर्यताम्। तां तृष्णां संत्यजन् प्राज्ञः सुखेनैवाभिपूर्यते" [महाभारतम् आदिपर्व 85.14] इति॥

तद् एतद् दर्शयति --- यच् च कामसुखं लोक इत्यादिना॥2.42॥

कायेन्द्रियसिद्धिर् अशुद्धिक्षयात् तपसः॥2.43॥

तपःसिद्धिसूचकम् आह --- कायेन्द्रियसिद्धिर् अशुद्धिक्षयात् तपसः। अशुद्धिलक्षणम् आवरणं तामसम् अधर्मादि। अणिमाद्या महिमा लघिमा प्राप्तिश् च। सुगमम्॥2.43॥

स्वाध्यायाद् इष्टदेवतासंप्रयोगः॥2.44॥

स्वाध्यायसिद्धिसूचकम् आह --- स्वाध्यायाद् इष्टदेवतासंप्रयोगः। सुगमम्॥2.44॥

समाधिसिद्धिर् ईश्वरप्रणिधानात्॥2.45॥

समाधिसिद्धिर् ईश्वरप्रणिधानात्। न च वाच्यम् ईश्वरप्रणिधानाद् एव चेत् संप्रज्ञातस्य समाधेर् अङ्गिनः सिद्धिः कृतं सप्तभिर् अङ्गैर् इति। ईश्वरप्रणिधानसिद्धौ दृष्टादृष्टाव् आन्तरव्यापारेण तेषाम् उपयोगात्। संप्रज्ञातसिद्धौ च संयोगपृथक्त्वेन दध्न इव क्रत्वर्थता पुरुषार्थता च। न चैवम् अनन्तरङ्गता धारणाध्यानसमाधीनां संप्रज्ञातसिद्धौ। संप्रज्ञातसमानगोचरतयाङ्गान्तरेभ्यो ऽतद्गोचरेभ्योऽस्यान्तरङ्गत्वप्रतीतेः। ईश्वरप्रणिधानम् अपि ईश्वरगोचरं न संप्रज्ञेयगोचरम् इति बहिरङ्गम् इति सर्वम् अवदातम्। प्रजानातीति प्रज्ञापदव्युत्पत्तिर् दर्शिता॥2.45॥

स्थिरसुखम् आसनम्॥2.46॥

उत्तरसूत्रम् अवतारयति --- उक्ताः सह सिद्धिभिर् यमनियमाः। आसनादीनि वक्ष्यामः। तत्र --- स्थिरसुखम् आसनम्। स्थिरं निश्चलं यत् सुखं सुखावहं तद् आसनम् इति सूत्रार्थः। आस्यत आस्ते वानेनेत्य् आसनम्। तस्य प्रभेदान् आह --- तद्यथेति। पद्मासनं प्रसिद्धम्। स्थितस्यैकतरः पादो भून्यस्त एकतरश् चाकुञ्चितजानोर् उपरि न्यस्त इत्य् एतद् वीरासनम्। पादतले वृषणसमीपे संपुटीकृत्य तस्योपरि पाणिकच्छपिकां कुर्यात् तद् भद्रासनम्। सव्यम् आकुञ्चितं चरणं दक्षिणजङ्घोर्वन्तरे दक्षिणं चाकुञ्चितं वामजङ्घोर्वन्तरे निक्षिपेद् एतत् स्वस्तिकम्। उपविश्य

श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरुपादौ प्रसार्य दण्डासनम् अभ्यसेत्। योगपट्टकयोगात् सोपाश्रयम्। जानुप्रसारितबाहोः शयनं पर्यङ्कः। क्रौञ्चनिषदनादीनि क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात् प्रत्येतव्यानि। पाष्णर्यग्रपादाभ्यां द्वयोर् आकुञ्चितयोर् अन्योन्यसंपीडनं समसंस्थानं, येन संस्थानेनावस्थितस्य स्थैर्यं सुखं च सिध्यति तद् आसनं स्थिरसुखम्। तद् एतद् भगवतः सूत्रकारस्य संमतं, तस्य विवरणं यथासुखं चेति॥2.46॥

प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्॥2.47॥

आसनस्वरूपम् उक्त्वा तत्साधनम् आह --- प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्। सांसिद्धिको हि प्रयत्नः शरीरधारको न योगाङ्गस्योपदेष्टव्यासनस्य कारणं तस्य तत्कारणत्व उपदेशवैयर्थ्यात् स्वरसत एव तत्सिद्धेः। तस्माद् उपदेष्टव्यस्यासनस्यायम् असाधको विरोधी च स्वाभाविकः प्रयत्नस् तस्य च यादृच्छिकासनहेतुतयासननियमोपहन्तृत्वात्। तस्माद् उपदिष्टनियमासनम् अभ्यस्यता स्वाभाविकप्रयत्नशैथिल्याय प्रयत्न आस्थेयो नान्यथोपदिष्टम् आसनं सिध्यतीति स्वाभाविकप्रयत्नशैथिल्यम् आसनसिद्धिहेतुः। अनन्ते वा नागनायके स्थिरतरफणासहस्रविधृतविश्वंभरामण्डले समापन्नं चित्तम् आसनं निर्वर्तयतीति॥2.47॥

ततो द्वंद्वानभिघातः॥2.48॥

आसनविजयसूचकम् आह --- ततो द्वंद्वानभिघातः। निगदव्याख्यातं भाष्यम्। आसनम् अप्य् उक्तं विष्णुपुराणे ---

"एवं भद्रासनादीनां समास्थाय गुणैर् युतम्" इति [विष्णुपुराणम् 6.7.39]॥2.48॥

तस्मिन् सति श्वासप्रश्वासयोर् गतिविच्छेदः प्राणायामः॥2.49॥

आसनानन्तरं तत्पूर्वकतां प्राणायामस्य दर्शयंस् तल्लक्षणम् आह --- तस्मिन् सति श्वासप्रश्वासयोर् गतिविच्छेदः प्राणायामः। रेचकपूरककुम्भकेष्व् अस्ति श्वासप्रश्वासयोर् गतिविच्छेद इति प्राणायामसामान्यलक्षणम् एतद् इति। तथा हि --- यत्र बाह्यो वायुर् आचम्यान्तर्धार्यते पूरके तत्रास्ति श्वासप्रश्वासयोर् गतिविच्छेदः। यत्रापि कौष्ठ्यो वायुर् विरेच्य बहिर्धार्यते रेचके तत्रास्ति श्वासप्रश्वासयोर् गतिविच्छेदः। एवं कुम्भकेऽपीति। तद् एतद् भाष्येणोच्यते --- सत्य् आसनेति॥2.49॥

बाह्याभ्यन्तरस्तम्भवृत्तिर् देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः॥2.50॥

प्राणायामविशेषत्रयलक्षणपरं सूत्रम् अवतारयति --- स त्व् इति। बाह्याभ्यन्तरस्तम्भवृत्तिर् देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः। वृत्तिशब्दः प्रत्येकं संबध्यते। रेचकम् आह --- यत्र प्रश्वासेति। पूरकम् आह --- यत्र श्वासेति। कुम्भकम् आह --- तृतीय इति। तद् एव स्फुटयति --- यत्रोभयोः श्वासप्रश्वासयोः सकृद् एव विधारकात् प्रयत्नाद् अभावो भवति न पुनः पूर्ववद् आपूरणप्रयत्नौघविधारकप्रयत्नो नापि रेचकप्रयत्नौघविधारकप्रयत्नोऽपेक्ष्यते। किं तु यथा तप्त उपले निहितं जलं परिशुष्यत् सर्वतः संकोचम् आपद्यत एवम् अयम् अपि मारुतो वहनशीलो बलवद् विधारकप्रयत्ननिरुद्धक्रियः शरीर एव सूक्ष्मीभूतोऽवतिष्ठते न तु पूरयति येन पूरकः। न तु रेचयति येन रेचक इति। इयान् अस्य देशो विषयः प्रादेशवितस्तिहस्तादिपरिमितो निवातप्रदेश ईशीकातूलादिक्रियानुमितो बाह्य एवम् आन्तरोऽप्य् आपादतलम् आमस्तकं पिपीलिकास्पर्शसदृशेनानुमितः स्पर्शेन। निमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भागः क्षणस् तेषाम् इयत्तावधारणेनावच्छिन्नः। स्वजानुमण्डलं पाणिना त्रिः परामृश्य च्छोटिकावच्छिन्नः कालो मात्रा ताभिः षट्त्रिंशता मात्राभिः परिमितः प्रथम उद्घातो मृदुः। स एव द्विगुणीकृतो द्वितीयो मध्यमः। स एव त्रिगुणीकृतस् तृतीयस् तीव्रः। तम् इमं संख्यापरिदृष्टं प्राणायामम् आह --- संख्याभिर् इति। स्वस्थस्य हि पुंसः श्वासप्रश्वासक्रियावच्छिन्नेन कालेन यथोक्तच्छोटिकाकालः समानः। प्रथमोद्घातकर्मतां नीत उद्घातो विजितो वशीकृतो निगृहीतः। क्षणानाम् इयत्ता कालो विवक्षितः। श्वासप्रश्वासेयत्ता संख्येति कथंचिद् भेदः। स खल्व् अयं प्रत्यहम् अभ्यस्तो दिवसपक्षमासादिक्रमेण देशकालप्रचयव्यापितया दीर्घः। परमनैपुण्यसमधिगमनीयतया च सूक्ष्मो न तु मन्दतया॥2.50॥

बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः॥2.51॥

एवं त्रयो विशेषा लक्षिताः। चतुर्थं लक्षयति --- बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः। व्याचष्टे --- देशकालसंख्याभिर् इति। आक्षिप्तो ऽभ्यासवशीकृताद् रूपाद् अवरोपितः सोऽपि दीर्घसूक्ष्म एव तत्पूर्वको बाह्याभ्यन्तरविषयप्राणायामो देशकालसंख्यादर्शनपूर्वकः। न चासौ चतुर्थस् तृतीय इव सकृत्प्रयत्नाद् अह्नाय जायते किं त्व् अभ्यस्यमानस् तां ताम् अवस्थाम् आपन्नस् तत्तदवस्थाविजयानुक्रमेण भवतीत्य् आह --- भूमिजयाद् इति। ननूभयोर् गत्यभावः स्तम्भवृत्ताव् अप्य् अस्तीति कोऽस्माद् अस्य विशेष इत्य् अत आह --- तृतीय इति। अनालोचनपूर्वः सकृत्प्रयत्ननिर्वर्तितस् तृतीयः। चतुर्थस् त्व् आलोचनपूर्वो बहुप्रयत्ननिर्वर्तनीय इति विशेषः। तयोः पूरकरेचकयोर् विषयोऽनालोचितोऽयं तु देशकालसंख्याभिर् आलोचित इत्य् अर्थः॥2.51॥

ततः क्षीयते प्रकाशावरणम्॥2.52॥

प्राणायामस्यावान्तरप्रयोजनम् आह --- ततः क्षीयते प्रकाशावरणम्। आव्रियतेऽनेन बुद्धिसत्त्वप्रकाश इत्य् आवरणं क्लेशः पाप्मा च। व्याचष्टे --- प्राणायामान् इति। ज्ञायतेऽनेनेति ज्ञानं बुद्धिसत्त्वप्रकाशो विवेकस्य ज्ञानं विवेकज्ञानम्। विवेकज्ञानम् आवृणोतीति विवेकज्ञानावरणीयम्। भव्यगेयप्रवचनीयादईनां ( 3.4.68) कर्तरि निपातनस्य प्रदर्शनार्थत्वात् कोपनीयरञ्जनीयवद् अत्रापि कर्तरि कृत्यप्रत्ययः। कर्मशब्देन तज्जन्यम् अपुण्यं तत्कारणं क्लेशं [च] लक्षयति। अत्रैवागमिनाम् अनुमतिम् आह --- यत् तद् आचक्षत इति। महामोहो रागः, तदविनिर्भागवर्तिन्य् अविद्यापि तद्ग्रहणेन गृह्यते। अकार्यम् अधर्मः। ननु प्राणायाम एव चेत् पाप्मानं क्षिणोति कृतं तर्हि तपसेत्य् अत आह --- दुर्बलं भवतीति। न तु सर्वथा क्षीयतेऽतस् तत्प्रक्षयाय तपोऽपेक्ष्यत इति। अत्राप्य् आगमिनाम् अनुमतिम् आह --- तथा चोक्तम् इति।

मनुर् अप्य् आह --- "प्राणायमैर् दहेद् दोषान्" ( 6.72) इति।

प्राणायामस्य योगाङ्गता विष्णुपुराणोक्ता ---

"प्राणाख्यम् अनिलं वश्यम् अभ्यासात् कुरुते तु यः। प्राणायामः स विज्ञेयः सबीजोऽबीज एव च॥ परस्परेणाभिभवं प्राणापानौ यदानिलौ। कुरुतस् तद्विधानेन तृतीयं संयमात् तयोः" ( 6.7.40--41) इति॥2.52॥

धारणासु च योग्यता मनसः॥2.53॥

किं च --- धारणासु च योग्यता मनसः। प्राणायामो हि मनः स्थिरीकुर्वन् धारणासु योग्यं करोति॥2.53॥

स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः॥2.54॥

तद् एवं यमादिभिः संस्कृतः संयमाय प्रत्याहारम् आरभते। तस्य लक्षणसूत्रम् अवतारयितुं पृच्छति --- अथेति। स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः। चित्तम् अपि मोहनीयरञ्जनीयकोपनीयैः शब्दादिभिर् विषयैर् न संप्रयुज्यते तदसंप्रयोगाच् चक्षुरादीन्य् अपि न संप्रयुज्यन्त इति सोऽयम् इन्द्रियाणां चित्तस्वरूपानुकारः। यत् पुनस् तत्त्वं चित्तम् अभिनिविशते न तदिन्द्रियाणि बाह्यविषयाणीत्य् अननुकारोऽपि। अत उक्तम् अनुकार इवेति। स्वविषयासंप्रयोगस्य साधारणस्य धर्मस्य चित्तानुकारनिमित्तत्वं सप्तम्या दर्शयति --- स्वेति। अनुकारं विवृणोति --- चित्तनिरोध इति। द्वयोर् निरोधहेतुश् च प्रयत्नस् तुल्य इति सादृश्यम्। अत्रैव दृष्टान्तम् आह --- यथा मधुकरराजम् इति। दार्ष्टान्तिके योजयति --- तथेति। अत्रापि विष्णुपुराणवाक्यम् ---

"शब्दादिष्व् अनुषक्तानि निगृह्याक्षाणि योगवित्। कुर्याच् चित्तानुकारीणि प्रत्याहारपरायणः"॥ ( 6.7.43)

तस्य प्रयोजनं तत्रैव दर्शितम् ---

"वश्यता परमा तेन जायते निश्चलात्मनाम्। इन्द्रियाणाम् अवश्यैस् तैर् न योगसाधकः" ( 6.7.44) इति॥2.54॥

ततः परमा वश्यतेन्द्रियाणाम्॥2.55॥

(इति श्रीपतञ्जलिविरचितयोगसूत्रेषु द्वितीयः साधनपादः॥2॥)

अस्यानुवादकं सूत्रम् --- ततः परमा वश्यतेन्द्रियाणाम्। ननु सन्ति किम् अन्या अपरमा इन्द्रियाणां वश्यता या अपेक्ष्य परमेयम् उच्यते, अद्धा ता दर्शयति --- शब्दादिष्व् इति। एतद् एव विवृणोति --- सक्ती रागो व्यसनम्। कया व्युपत्त्या (व्युत्पत्त्या), व्यस्यति क्षिपति निरस्यत्य् एनं श्रेयस इति। तदभावोऽव्यसनं वश्यता। अपराम् अपि वश्यताम् आह --- अविरुद्धा श्रुत्याद्यविरुद्धशब्दादिसेवनं तद्विरुद्धेष्व् अप्रवृत्तिः, सैव न्याय्या न्यायाद् अनपेता यतः। अपराम् अपि वश्यताम् आह --- शब्दादिसंप्रयोग इति। शब्दादिष्व् इन्द्रियाणां संप्रयोगः स्वेच्छया भोग्येषु खल्व् अयं स्वतन्त्रो न भोग्यतन्त्र इत्य् अर्थः। अपराम् अपि वश्यताम् आह --- रागद्वेषाभावे सुखदुःखशून्यं माध्यस्थ्येन शब्दादिज्ञानम् इत्य् एके। सूत्रकाराभिमतां वश्यतां परमर्षिसंमताम् आह --- चित्तस्यैकाग्र्यात् सहेन्द्रियैर् अप्रवृत्तिर् एव शब्दादिष्व् इति जैगीषव्यः। अस्याः परमताम् आह --- परमा त्व् इति। तुशब्दो वश्यतान्तरेभ्यो विशिनष्टि। वश्यतान्तराणि हि विषयाशीविषसंप्रयोगशालितया क्लेशविषसंपर्कशङ्कां नापक्रामन्ति। न हि विषविद्यावित्प्रकृष्टोऽपि वशीकृतभुजंगमो भुजंगमम् अङ्के निधाय स्वपिति विश्रब्धः। इयं तु वश्यता विदूरीकृतनिखिलविषयव्यतिषङ्गा निराशङ्कतया परमेत्य् उच्यते। नेतरेन्द्रियजयवद् इति। यथा यतमानसंज्ञायाम्

एकेन्द्रियजयेऽपीन्द्रियान्तरजयाय प्रयत्नान्तरम् अपेक्षन्ते न चैवं चित्तनिरोधे बाह्येन्द्रियनिरोधाय प्रयत्नान्तरापेक्षेत्य् अर्थः॥2.55॥

क्रियायोगं जगौ क्लेशान् विपाकान् कर्मणाम् इह। तद्दुःखत्वं तथा व्यूहान् पादे योगस्य पञ्चकम्॥ इति॥1॥

**इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलयोगसूत्रभाष्यव्याख्यायां द्वितीयः साधनपादः॥2॥**

# तत्त्ववैशारद्यां विभूतिपादः

https://sa.wikisource.org/s/9ts

**तत्त्ववैशारदी**

तत्र तृतीयो विभूतिपादः।

देशबन्धश् चित्तस्य धारणा॥3.1॥

प्रथमद्वितीयपादाभ्यां समाधिस् तत्साधनं चोक्तम्। तृतीयपादे तत्प्रवृत्त्यनुगुणाः श्रद्धोत्पादहेतवो विभूतयो वक्तव्याः। ताश् च संयमसाध्याः। संयमश् च धारणाध्यानसमाधिसमुदाय इति विभूतिसाधनतया पञ्चभ्यश् च योगाङ्गेभ्यो बहिरङ्गेभ्योऽस्याङ्गत्रयस्यान्तरङ्गतया विशेषज्ञापनार्थम् अत्र त्रयस्योपन्यासः। तत्रापि च धारणाध्यानसमाधीनां कार्यकारणभावेन नियतपौर्वापर्यत्वात् तदनुरोधेनोपन्यासे क्रम इति प्रथमं धारणा लक्षणीयेत्य् आह --- उक्तानीति। देशबन्धश् चित्तस्य धारणा। आध्यात्मिकदेशम् आह --- नाभिचक्र इति। आदिशब्देन ताल्वादयो ग्राह्याः। बन्धः संबन्धः। बाह्यदेशम् आह --- बाह्य इति। बाह्ये च न स्वरूपेण चित्तस्य संबन्धः संभवतीत्य् उक्तं वृत्तिमात्रेण ज्ञानमात्रेणेति। अत्रापि पुराणम् ---

"प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्। वशीकृत्य ततः कुर्याच् चित्तस्थानं शुभाश्रये" [विष्णुपुराणम् 6.7.45]

शुभाश्रया बाह्या हिरण्यगर्भवासवप्रजापतिप्रभृतयः। इदं च तत्रोक्तम् ---

"मूर्तं भगवतो रूपं सर्वोपाश्रयनिःस्पृहम्। एषा वै धारणा ज्ञेया यच् चित्तं तत्र धार्यते॥ तच् च मूर्तं हरे रूपं यद् विचिन्त्यं नराधिप। तच् छ्रूयताम् अनाधारा धारणा नोपपद्यते॥ प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम्। सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम्॥ समकर्णान्तविन्यस्तचारुकुण्डलभूषणम्। कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम्॥ वलीविभङ्गिना मग्ननाभिना चोदरेण च। प्रलम्बाष्टभुजं विष्णुम् अथवापि चतुर्भुजम्॥ समस्थितोरुजङ्घं च स्वस्तिकाङ्घ्रिवराम्बुजम्। चिन्तयेद् ब्रह्मभूतं तं पीतनिर्मलवाससम्॥ किरीटचारुकेयूरकटकादिविभूषितम्। शार्ङ्गचक्रगदाखड्गशङ्खाक्षवलयान्वितम्॥ चिन्तयेत् तन्मयो योगी समाधायात्ममानसम्। तावद् यावद् दृढीभूता तत्रैव नृप धारणा॥ एतद् आतिष्ठतोऽन्यद् वा स्वेच्छया कर्म कुर्वतः। नापयाति यदा चित्तं सिद्धां मन्येत तां तदा" [विष्णुपुराणम् 6.7.77--85] इति॥3.1॥

तत्र प्रत्ययैकतानता ध्यानम्॥3.2॥

धारणासाध्यं ध्यानं लक्षयति --- तत्र प्रत्ययैकतानता ध्यानम्। एकतानतैकाग्रता। सुगमं भाष्यम्। अत्रापि पुराणम् ---

"तद्रूपप्रत्ययैकाग्र्यसंततिश् चान्यनिःस्पृहा। तद् ध्यानं प्रथमैर् अङ्गैः षड्भिर् निष्पाद्यते नृप" [विष्णुपुराणम् 6.7.89] इति॥3.2॥

तद् एवार्थमात्रनिर्भासं स्वरूपशून्यम् इव समाधिः॥3.3॥

ध्यानसाध्यं समाधिं लक्षयति --- तद् एवार्थमात्रनिर्भासं स्वरूपशून्यम् इव समाधिः। व्याचष्टे --- ध्यानम् एवेति। ध्येयाकारनिर्भासम् इति। ध्येयाकारस्यैव निर्भासो न ध्यानाकारस्येति। अत एवाह --- शून्यम् इति। ननु शून्यं चेत् कथं ध्येयं प्रकाशेतेत्य् अत आह --- इवेति। अत्रैव हेतुम् आह --- ध्येयस्वभावावेशाद् इति। अत्रापि पुराणम् ---

"तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत्। मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" [विष्णुपुराणम् 6.7.90] इति॥

ध्येयाद् ध्यानस्य भेदः कल्पना तद्धीनम् इत्य् अर्थः। अष्टाङ्गयोगम् उक्त्वा खाण्डिक्याय केशिध्वज उपसंजहार ---

"क्षेत्रज्ञः करणी ज्ञानं करणं तद् अचेतनम्। निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तते" [विष्णुपुराणम् 6.7.92] इति॥3.3॥

त्रयम् एकत्र संयमः॥3.4॥

धारणाध्यानसमाधिर् इत्य् एतत्त्रयस्य तत्र तत्र नियुज्यमानस्य प्रातिस्विकसंज्ञोच्चारणे गौरवं स्याद् इति लाघवार्थं परिभाषासूत्रम् अवतारयति --- त्रयम् एकत्र संयमः। व्याचष्टे --- एकविषयाणीति (तद् एतद् इति)। वाचकत्वशङ्काम् अपनयति --- तद् अस्येति। तन्त्र्यते व्युत्पाद्यते योगो येन शास्त्रेण तत् तन्त्रं तद्भवा तान्त्रिकी। संयमप्रदेशाः "परिणामत्रयसंयमात्-" [योगसूत्रम् 3.16] इत्येवमादयः॥3.4॥

तज्जयात् प्रज्ञालोकः॥3.5॥

संयमविजयस्याभ्याससाधनस्य फलम् आह --- तज्जयात् प्रज्ञालोकः। प्रत्ययान्तरानभिभूतस्य निर्मलप्रवाहेऽवस्थानम् आलोकः प्रज्ञायाः। सुगमं भाष्यम्॥3.5॥

तस्य भूमिषु विनियोगः॥3.6॥

क्व पुनर् विनियुक्तस्य संयमस्य फलम् एतद् इत्य् अत आह --- तस्य भूमिषु विनियोगः। भूमिं विशेषयति भाष्यकारः --- तस्येति। जिताया भूमेर् यानन्तरा भूमिर् अवस्थाजिता तत्र विनियोगः। स्थूलविषये सवितर्के समाधौ वशीकृते संयमेन संयमस्याविजिते निर्वितर्के विनियोगः। तस्मिन्न् अपि वशीकृते सविचारे विनियोगः। एवं निर्विचारे विनियोग इत्य् अर्थः। अत एव स्थूलविषयसमापत्तिसिद्धौ सत्यां पुराणे तत्तदायुधभूषणापनयेन सूक्ष्मविषयः समाधिर् अवतारितः ---

"ततः शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः। चिन्तयेद् भगवद्रूपं प्रशान्तं साक्षसूत्रकम्॥ यदा च धारणा तस्मिन्न् अवस्थानवती ततः। किरीटकेयूरमुखैर् भूषणै रहितं स्मरेत्॥ तदैकावयवं देवं सोऽहं चेति पुनर् बुधः। कुर्यात् ततो ह्य् अहम् इति प्रणिधानपरो भवेत्॥" [विष्णुपुराणम् 6.7.86--88] इति॥

कस्मात् पुनर् अधरां भूमिं विजित्योत्तरां विजयते विपर्ययः कस्मान् न भवतीत्य् अत आह --- न ह्य् अजिताधरभूमिर् इति। न हि शिलाह्रदाद् गङ्गां प्रति प्रस्थितोऽप्राप्य मेघवनं गङ्गां प्राप्नोति। ईश्वरप्रसादाज् जितोत्तरभूमिकस्य चेति कस्मात् तदर्थस्योत्तरभूमिविजयस्य प्रत्यासन्नस्यान्यत एवेश्वरप्रणिधानाद् एवावगतत्वात्। निष्पादितक्रिये कर्मण्य् अविशेषाधायिनः साधनस्य साधनन्यायातिपाताद् इति। स्याद् एतद् आगमतः सामान्यतोऽवगतानाम् अप्य् अवान्तरभूमिभेदानां कुतः पौर्वापर्यावगतिर् इत्य् अत आह --- भूमेर् अस्या इति। जितः पूर्वो योग उत्तरस्य योगस्य ज्ञानप्रवृत्त्यधिगमहेतुः। अवस्थैवावस्थावान् इत्य् अभिप्रेत्यैतद् द्रष्टव्यम्॥3.6॥

त्रयम् अन्तरङ्गं पूर्वेभ्यः॥3.7॥

कस्मात् पुनर् योगाङ्गत्वाविशेषेऽपि संयमस्य तत्र तत्र विनियोगो नेतरेषां पञ्चानाम् इत्य् अत आह --- त्रयम् अन्तरङ्गं पूर्वेभ्यः। तद् इदं साधनत्रयं साध्यसमानविषयत्वेनान्तरङ्गं न त्व् एवं यमादयस् तस्मात् ते बहिरङ्गा इत्य् अर्थः॥3.7॥

तद् अपि बहिरङ्गं निर्बीजस्य॥3.8॥

साधनत्रयस्य संप्रज्ञात एवान्तरङ्गत्वं न त्व् असंप्रज्ञाते तस्य निर्बीजतया तैः सह समानविषयत्वाभावात् तेषु चिरनिरुद्धेषु संप्रज्ञातपरमकाष्ठापरनामज्ञानप्रसादरूपपरवैराग्यानन्तरम् उत्पादाच् चेत्य् आह --- तद् इति। तद् अपि बहिरङ्गं निर्बीजस्य। समानविषयत्वम् अन्तरङ्गत्वप्रयोजकम् इह न तु तदनन्तरभावस् तस्य बहिरङ्गेश्वरप्रणिधानवर्तितया सव्यभिचारत्वाद् इति स्थिते सव्यभिचारम् अप्य् अन्तरङ्गलक्षणं तदनन्तरभावित्वम् अस्य नास्ति। तस्माद् दूरापेतान्तरङ्गता संयमस्यासंप्रज्ञात इति दर्शयितुं तदभावे भावाद् इत्य् उक्तम्॥ 3.8॥

व्युत्थाननिरोधसंस्कारयोर् अभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः॥3.9॥

परिणामत्रयसंयमाद् इत्य् अत्रोपयोक्ष्यमाणपरिणामत्रयं प्रतिपिपादयिषुर् निर्बीजप्रसङ्गेन पृच्छति --- अथेति। व्युत्थानसंप्रज्ञातयोश् चित्तस्य स्फुटतरपरिणामभेदप्रचयानुभवान् न प्रश्नावतारो निरोधे तु नानुभूयते परिणामः। न चाननुभूयमानो नास्ति, चित्तस्य त्रिगुणतया चलत्वेन गुणानां क्षणम् अप्य् अपरिणामस्यासंभवाद् इत्य् अर्थः। प्रश्नोत्तरं सूत्रम् --- व्युत्थाननिरोधसंस्कारयोर् अभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः। असंप्रज्ञातं समाधिम् अपेक्ष्य संप्रज्ञातो व्युत्थानम्। निरुध्यते ऽनेनेति निरोधो ज्ञानप्रसादः परं वैराग्यं तयोर् व्युत्थाननिरोधसंस्कारयोर् अभिभवप्रादुर्भावौ। तत्र व्युत्थानसंस्कारस्याभिभवो निरोधसंस्कारस्याविर्भावश् चित्तस्य धर्मिणो निरोधक्षणस्य निरोधावसरस्य द्वयोर् अवस्थयोर् अन्वयः। न हि चित्तं धर्मि संप्रज्ञातावस्थायाम् असंप्रज्ञातावस्थायां च संस्काराभिभवप्रादुर्भावयोः स्वरूपेण भिद्यत इति। ननु यथोत्तरे क्लेशा अविद्यामूला अविद्यानिवृत्तौ निवर्तन्त इति न तु तन्निवृत्तौ पृथक् प्रयत्नान्तरम् आस्थीयत एवं

व्युत्थानप्रत्ययमूलाः संस्कारा व्युत्थानप्रत्ययनिवृत्ताव् एव निवर्तन्त इति तन्निवृत्तौ न निरोधसंस्कारोऽपेक्षितव्य इत्य् अत आह --- व्युत्थानसंस्कारा इति। न कारणमात्रनिवृत्तिः कार्यनिवृत्तिहेतुर् मा भूत् कुविन्दनिवृत्ताव् अपि पटस्य निवृत्तिर् अपि तु यत्कारणात्मकं यत्कार्यं तत्कारणनिवृत्तौ तत्कार्यनिवृत्तिः। उत्तरे च क्लेशा अविद्यात्मान इत्य् उक्तम् अतस् तन्निवृत्तौ तेषां निवृत्तिर् उपपन्ना। न त्व् एवं प्रत्ययात्मानः संस्काराश् चिरनिरुद्धे प्रत्यये संप्रति स्मरणदर्शनात्। तस्मात् प्रत्ययनिवृत्ताव् अपि तन्निवृत्तौ निरोधसंस्कारप्रचय एवोपासनीय इत्य् अर्थः। सुगमम् अन्यत्॥3.9॥

तस्य प्रशान्तवाहिता संस्कारात्॥3.10॥

सर्वथा व्युत्थानसंस्काराभिभवे तु बलवता निरोधसंस्कारेण चित्तस्य कीदृशः परिणाम इत्य् अत आह --- तस्य प्रशान्तवाहिता संस्कारात्। व्युत्थानसंस्कारमलरहितनिरोधसंस्कारपरम्परामात्रवाहिता प्रशान्तवाहिता। कस्मात् पुनः संस्कारपाटवम् अपेक्षते न तु संस्कारमात्रम् इत्य् अत आह --- तत्संस्कारमान्द्य इति। तद् इति निरोधं परामृशति। ये तु नाभिभूयत इति पठन्ति ते तदा व्युत्थानं परामृशन्ति॥3.10॥

सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः॥3.11॥

संप्रज्ञातसमाधिपरिणामावस्थां चित्तस्य दर्शयति --- सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः। विक्षिप्तता सर्वार्थता। सन् न विनश्यतीति क्षयस् तिरोभावो नासद् उत्पद्यत इति उदय आविर्भावः। स्वात्मभूतयोः सर्वार्थतैकाग्रतयोर् धर्मयोर् याव् अपायोपजनौ सर्वार्थताया अपाय एकाग्रताया उपजनस् तयोर् अनुगतं चित्तं समाधीयते पूर्वापरीभूतसाध्यमानसमाधिविशेषणं भवतीति॥3.11॥

ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः॥3.12॥

ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः। पुनः समाधेः पूर्वापरीभूताया अवस्थायाः समाधिनिष्पत्तौ सत्यां शान्तोदिताव् अतीतवर्तमानौ, तुल्यौ च तौ प्रत्ययौ चेति तुल्यप्रत्ययौ। एकाग्रतायां तु द्वयोः सादृश्यम्। समाहितचित्तस्येति समाधिनिष्पत्तिर् दर्शिता। तथैवैकाग्र्यम् एव। अवधिम् आह --- आ समाधिभ्रेषाद् भ्रंशाद् इति॥3.12॥

एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः॥3.13॥

प्रासङ्गिकं च वक्ष्यमाणौपयिकं च भूतेन्द्रियपरिणामं विभजते --- एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः। व्याचष्टे --- एतेनेति। ननु चित्तपरिणतिमात्रम् उक्तं न तु तत्प्रकारा धर्मलक्षणावस्थापरिणामास् तत् कथं तेषाम् अतिदेश इत्य् अत आह --- तत्र व्युत्थाननिरोधयोर् इति। धर्मलक्षणावस्थाशब्दाः परं नोच्चारिता न तु धर्मलक्षणावस्थापरिणामा नोक्ता इति संक्षेपार्थः। तथा हि व्युत्थाननिरोधसंस्कारयोर् इत्य् अत्रैव सूत्रे धर्मपरिणाम उक्तः। इमं च धर्मपरिणामं दर्शयता तेनैव धर्माधिकरणो लक्षणपरिणामोऽपि सूचित एवेत्य् आह --- लक्षणपरिणाम इति। लक्ष्यते ऽनेनेति लक्षणं कालभेदः। तेन हि लक्षितं वस्तु वस्त्वन्तरेभ्यः कालान्तरयुक्तेभ्यो व्यवच्छिद्यत इति। निरोधस् त्रिलक्षणः। अस्यैव व्याख्यानं त्रिभिर् अध्वभिर् युक्तः। अध्वशब्दः कालवचनः। स खल्व् अनागतलक्षणम् अध्वानं प्रथमं हित्वा, तत् किम् अध्ववद्धर्मत्वम् अप्य् अतिपतति नेत्य् आह --- धर्मत्वम् अनतिक्रान्तो वर्तमानलक्षणं प्रतिपन्नः। य एव निरोधोऽनागत आसीत् स एव संप्रति वर्तमानो न तु निरोधो ऽनिरोध इत्य् अर्थः। वर्तमानतास्वरूपव्याख्यानम् --- यत्रास्य स्वरूपेण स्वोचितार्थक्रियाकारिणा रूपेणाभिव्यक्तिः समुदाचारः। एषोऽस्य प्रथमम् अनागतम् अध्वानम् अपेक्ष्य द्वितीयोऽध्वा। स्याद् एतद् अनागतम् अध्वानं हित्वा चेद् वर्तमानताम् आपन्नस् तां च हित्वातीतताम् आपत्स्यते हन्त भोर् अध्वनाम् उत्पादविनाशौ स्याताम्। न चेष्येते, न ह्य् असत उत्पादो नापि सतो विनाश इत्य् अत आह --- न चातीतानागताभ्यां सामान्यात्मनावस्थिताभ्यां वियुक्त इति। अनागतस्य निरोधस्य वर्तमानतालक्षणं दर्शयित्वा वर्तमानव्युत्थानस्यातीततां तृतीयम् अध्वानम् आह --- तथा व्युत्थानम् इति। तत् किं निरोध एवानागतो न व्युत्थानं नेत्य् आह --- एवं पुनर् व्युत्थानम् इति। व्युत्थानजात्यपेक्षया पुनर्भावो न व्यक्त्यपेक्षया। न ह्य् अतीतं पुनर्भवतीति। स्वरूपाभिव्यक्तिर् अर्थक्रियाक्षमस्याविर्भावः। स चैवंलक्षणपरिणाम उक्तस् तज्जातीयेषु पौनःपुन्येन वर्तत इत्य् अत आह --- एवं पुनर् इति। धर्मपरिणामसूचितम् एवावस्थापरिणामम् आह --- तथेति। धर्माणां वर्तमानाध्वनां बलवत्त्वाबलवत्त्वे अवस्था तस्याः प्रतिक्षणं तारतम्यं परिणामः। उपसंहरति --- एष इति। परिणामभेदानां संबन्धिभेदान् निर्धारयति --- तत्रानुभवानुसाराद् धर्मिण इति। तत् किम् एष परिणामो गुणानां कादाचित्को नेत्य् आह --- एवम् इति। कस्मात् पुनर् अयं परिणामः सदातन इत्य् अत आह --- चलं चेति। चो हेत्वर्थः। वृत्तं प्रचारः। एतद् एव कुत इत्य् अत आह --- गुणस्वाभाव्यम् इति। उक्तम् अत्रैव पुरस्तात्। सोऽयं त्रिविधोऽपि चित्तपरिणामो भूतेन्द्रियेषु सूत्रकारेण निर्दिष्ट इत्य् आह --- एतेनेति। एष धर्मपरिणामभेदो धर्मधर्मिणोर् भेदम् आलक्ष्य। तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर् घटादिर् वा धर्मपरिणामः। धर्माणां चातीतानागतवर्तमानरूपता लक्षणपरिणामः। वर्तमानलक्षणापन्नस्य गवादेर् बाल्यकौमारयौवनवार्धक्यम् अवस्थापरिणामः। घटादीनाम् अपि नवपुरातनतावस्थापरिणामः। एवम् इन्द्रियाणाम् अपि धर्मिणां तत्तन्नीलाद्यालोचनं धर्मपरिणामो धर्मस्य वर्तमानतादिलक्षणपरिणामो वर्तमानलक्षणस्य रत्नाद्यालोचनस्य स्फुटत्वास्फुटत्वादिर् अवस्थापरिणामः। सोऽयम् एवंविधो भूतेन्द्रियपरिणामो धर्मिणो धर्मलक्षणावस्थानां भेदम् आश्रित्य वेदितव्यः। अभेदम् आश्रित्याह --- परमार्थतस् त्व् इति। तुशब्दो भेदपक्षाद् विशिनष्टि। पारमार्थिकत्वम् अस्य ज्ञाप्यते न त्व्

अन्यस्य परिणामत्वं निषिध्यते। कस्मात् --- धर्मिस्वरूपमात्रो हीति। ननु यदि धर्मिविक्रियैव धर्मः कथम् असंकरप्रत्ययो लोके परिणामेष्व् इत्य् अत आह --- धर्मद्वारेति। धर्मशब्देन धर्मलक्षणावस्थाः परिगृह्यन्ते। तद्द्वारेण धर्मिण एव विक्रियेत्य् एका चासंकीर्णा च। तद्द्वाराणाम् अभेदेऽपि धर्मिणः परस्परसंकरात्। ननु धर्माणाम् अभिन्नत्वे धर्मिणोऽध्वनां च भेदे धर्मिणो ऽनन्यत्वेन धर्मेणापीह धर्मिवद् भवितव्यम् इत्य् अत आह --- तत्र धर्मस्येति। भावः संस्थानभेदः। सुवर्णादेर् यथा भाजनस्य रुचकस्वस्तिकव्यपदेशभेदो भवति तन्मात्रम् अन्यथा भवति न तु द्रव्यं सुवर्णम् असुवर्णताम् उपैति अत्यन्तभेदाभावाद् इति। वक्ष्यमाणाभिसंधिर् एकान्तवादिनं बौद्धम् उत्थापयति --- अपर आहेति। धर्मा एव हि रुचकादयस् तथोत्पन्नाः परमार्थसन्तो न पुनः सुवर्णं नाम किंचिद् एकम् अनेकेष्व् अनुगतं द्रव्यम् इति। यदि पुनर् निवर्तमानेष्व् अपि धर्मेषु द्रव्यम् अनुगतं भवेत् ततो न चितिशक्तिवत् परिणमेतापि तु कौटस्थ्येनैव परिवर्तेत। परिणामात्मकं रूपं परिहाय रूपान्तरेण कौटस्थ्येन परिवर्तनं परिवृत्तिः। यथा चितिशक्तिर् अन्यथान्यथाभावं भजमानेष्व् अपि गुणेषु स्वरूपाद् अप्रच्युता कूटस्थनित्यैवं सुवर्णाद्य् अपि स्यान् न चेष्यते। तस्मान् न द्रव्यम् अतिरिक्तं धर्मेभ्य इति। परिहरति --- अयम् अदोष इति। कस्मात्। एकान्ततानभ्युपगमात्। यदि चितिशक्तेर् इव द्रव्यस्यैकान्तिकीं नित्यताम् अभ्युपगच्छेम तत एवम् उपालभ्येमहि। न त्व् अइकान्तिकीं नित्यताम् आतिष्ठामहे किं तु तद् एतत् त्रैलोक्यं न तु द्रव्यमात्रं व्यक्तेर् अर्थक्रियाकारिणो रूपाद् अपैति। कस्मान् नित्यत्वप्रतिषेधात् प्रमाणेन। यदि हि घटो व्यक्तेर् नापेयात् कपालशर्कराचूर्णादिष्व् अवस्थास्व् अपि व्यक्तो घट इति पूर्ववद् उपलब्ध्यर्थक्रिये कुर्यात् तस्माद् अनित्यं त्रैलोक्यम्। अस्तु तर्ह्य् अनित्यम् एवोपलब्ध्यर्थक्रियारहितत्वेन गगनारविन्दवद् अतितुच्छत्वाद् इत्य् अत आह --- अपेतम् अप्य् अस्ति, नात्यन्ततुच्छता येनैकान्ततोऽनित्यं स्याद् इत्य् अर्थः। कस्माद् विनाशप्रतिषेधात् प्रमाणेन। तथा हि यत् तुच्छं न तत् कदाचिद् अप्य् उपलब्ध्यर्थक्रिये करोति। यथा गगनारविन्दम्। करोति चैतत् त्रैलोक्यं कदाचिद् उपलब्ध्यर्थक्रिये इति। तथोत्पत्तिमद्द्रव्यत्वधर्मलक्षणावस्थायोगित्वादयोऽप्य् अत्यन्ततुच्छगगननलिननरविषाणादिव्यावृत्ताः सत्त्वहेतव उदाहार्याः। तथा च धर्मी नात्यन्तं नित्यो येन चितिशक्तिवत् कूटस्थनित्यः स्यात् किं तु कथंचिन् नित्यः। तथा च परिणामीति सिद्धम्। एतेन मृत्पिण्डाद्यवस्थासु कार्याणां घटादीनाम् अनागतानां सत्त्वं वेदितव्यम्। स्याद् एतत्। अपेतम् अपि चेद् अस्ति कस्मात् पूर्ववन् नोपलभ्यत इत्य् अत आह --- संसर्गात् स्वकारणलयात् सौक्ष्म्यं दर्शनानर्हत्वं ततश् चानुपलब्धिर् इति। तद् एवं धर्मपरिणामं समर्थ्य लक्षणपरिणामम् अपि लक्षणानां परस्परानुगमनेन समर्थयते --- लक्षणपरिणाम इति। एकैकं लक्षणं लक्षणान्तराभ्यां समनुगतम् इत्य् अर्थः। नन्व् एकलक्षणयोगे लक्षणान्तरे नानुभूयेते तत् कथं तद्योग इत्य् अत आह --- यथा पुरुष इति। न ह्य् अनुभवाभावः प्रमाणसिद्धम् अपलपति, तदुत्पाद एव तत्र तत्सद्भावे प्रमाणम् असत उत्पादासंभवान् नरविषाणवद् इति। परोक्तं दोषम् उत्थापयति --- अत्र लक्षणपरिणाम इति। यदा धर्मो वर्तमानस् तदैव यद्य् अतीतोऽनागतश् च तदा त्रयोऽप्य् अध्वानः संकीर्येरन्न् अनुक्रमेण चाध्वनां भावेऽसदुत्पादप्रसङ्ग इति भावः। परिहरति --- तस्य परिहार इति। वर्तमानतैव हि धर्माणाम् अनुभवसिद्धा ततः प्राक्पश्चात्कालसंबन्धम् अवगमयति। न खल्व् असद् उत्पद्यते न च सद् विनश्यति। तद् इदम् आह --- एवं हि न चित्तम् इति। क्रोधोत्तरकालं हि चित्तं रागधर्मकम् अनुभूयते। यदा च रागः क्रोधसमयेऽनागतत्वेन नासीत् कथम् असाव् उत्पद्येतानुत्पन्नश् च कथम् अनुभूयेतेति। भवत्व् एवं तथापि कुतोऽध्वनाम् असंकर इति पृच्छति --- किं चेति। किं कारणम् असंकरे। चः पुनरर्थे। उत्तरम् आह --- त्रयाणां लक्षणानां युगपन् नास्ति संभवः। कस्मिन्न् एकस्यां चित्तवृत्तौ। क्रमेण तु लक्षणानाम् एकतमस्य स्वव्यञ्जकाञ्जनस्य भावो भवेत् संभवेल् लक्ष्याधीननिरूपणतया लक्षणानां लक्ष्याकारेण तद्वत्ता। अत्रैव पञ्चशिखाचार्यसंमतिम् आह --- उक्तं चेति। एतच् च प्राग् एव व्याख्यातम्। उपसंहरति --- तस्माद् इति। आविर्भावतिरोभावरूपविरुद्धधर्मसंसर्गाद् असंकरोऽध्वनाम् इति। दृष्टान्तम् आह --- यथा रागस्येति। पूर्वं क्रोधस्य रागसंबन्धावगमो दर्शित इति। इदानीं तु विषयान्तरवर्तिनो रागस्य विषयान्तरवर्तिना रागान्तरेण संबन्धावगम इति। दार्ष्टान्तिकम् आह --- तथा लक्षणस्येतीति। ननु सत्य् अप्य् अनेकान्ताभ्युपगमेऽभेदोऽस्तीति धर्मलक्षणावस्थान्यत्वे तदभिन्नस्य धर्मिणोऽप्य् अन्यत्वप्रसङ्गः। स एव च नेष्यते तदनुगमानुभवविरोधाद् इत्य् अत आह --- न धर्मी त्र्यध्वा यतस् तदभिन्ना धर्मास् त्र्यध्वानः। धर्माणाम् अध्वत्रययोगम् एव स्फोरयति --- ते लक्षिता अभिव्यक्ता वर्तमाना इति यावत्। अलक्षिता अनभिव्यक्ता अनागता अतीता इति (अतीताश् चेति) यावत्। तत्र लक्षितास् तां ताम् अवस्थां बलवत्त्वदुर्बलत्वादिकां प्राप्नुवन्तो ऽन्यत्वेन प्रतिनिर्दिश्यन्तेऽवस्थान्तरतो न द्रव्यान्तरतः। अवस्थाशब्देन धर्मलक्षणावस्था उच्यन्ते। एतद् उक्तं भवति --- अनुभव एव हि धर्मिणो धर्मादीनां भेदाभेदौ व्यवस्थापयति। न ह्य् अइकान्तिकेऽभेदे धर्मादीनां धर्मिणो धर्मिरूपवद् धर्मादित्वम्। नाप्य् अइकान्तिके भेदे गवाश्ववद् धर्मादित्वम्। स चानुभवोऽनैकान्तिकत्वम् अवस्थापयन्न् अपि धर्मादिषूपजनापायधर्मकेष्व् अपि धर्मिणम् एकम् अनुगमयन् धर्मांश् च परस्परतो व्यावर्तयन् प्रत्यात्मम् अनुभूयत इति तदनुसारिणो वयं न तम् अतिवर्त्य स्वेच्छया धर्मानुभवान् व्यवस्थापयितुम् ईश्महे इति। अत्रैव लौकिकं दृष्टान्तम् आह --- यथैका रेखेति। यथा तद् एव रेखास्वरूपं तत्तत्स्थानापेक्षया शतादित्वेन व्यपदिश्यत एवं तद् एव धर्मिरूपं तत्तद्धर्मलक्षणावस्थाभेदेनान्यत्वेन प्रतिनिर्दिश्यत इत्य् अर्थः। दार्ष्टान्तिकार्थं दृष्टान्तान्तरम् आह --- यथा चैकत्वेऽपीति। अत्रान्तरे परोक्तं दोषम् उत्थापयति --- अवस्थेति। अवस्थापरिणामे धर्मलक्षणावस्थापरिणामे कौटस्थ्यदोषप्रसङ्ग उक्तो धर्मिधर्मलक्षणावस्थानाम्। पृच्छति --- कथम् इति। उत्तरम् --- अध्वनो व्यापारेणेति। दध्नः किल यो ऽनागतोऽध्वा तस्य व्यापारः क्षीरस्य वर्तमानत्वं तेन व्यवहितत्वाद् धेतोः। यदा धर्मो दधिलक्षणः स्वव्यापारं दाधिकाद्यारम्भं क्षीरे सन्न् अपि न करोति तदानागतः। यदा करोति तदा वर्तमानः। यदा कृत्वा निवृत्तः सन्न् एव स्वव्यापाराद् दाधिकाद्यारम्भात् तदातीत इति। एवं त्रैकाल्येऽपि सत्त्वाद् धर्मधर्मिणोर् लक्षणानाम् अवस्थानां च कौटस्थ्यं प्राप्नोति। सर्वदा सत्ता हि नित्यत्वं, चतुर्णाम् अपि च सर्वदा सत्त्वेऽसत्त्वे वा नोत्पादः, तावन्मात्रं च लक्षणं कूटस्थनित्यतायाः। न हि चितिशक्तेर् अपि कूटस्थनित्यायाः कश्चिद् अन्यो विशेष इति भावः। परिहरति --- नासौ दोषः, कस्माद् गुणिनित्यत्वे ऽपि गुणानां विमर्दोऽन्योन्याभिभाव्याभिभावकत्वं तस्य वैचित्र्यात्। एतद् उक्तं भवति --- यद्य् अपि सर्वदा सत्त्वं चतुर्णाम् अपि गुणिगुणानां तथापि गुणविमर्दवैचित्र्येण तदात्मभूततद्विकाराविर्भावतिरोभावभेदेन परिणामशालितया न कौटस्थ्यम्। चितिशक्तेस् तु न स्वात्मभूतविकाराविर्भावतिरोभाव इति कौटस्थ्यम्। यथाहुः ---

"नित्यं तम् आहुर् विद्वांसो यत्स्वभावो न नशय्ति" इति।

विमर्दवैचित्र्यम् एव विकारवैचित्र्ये हेतुं प्रकृतौ विकृतौ च दर्शयति --- यथा संस्थानं पृथिव्यादिपरिणामलक्षणम् आदिमद् धर्ममात्रं विनाशि तिरोभावि शब्दादीनां शब्दस्पर्शरूपरसगन्धतन्मात्राणां स्वकार्यम् अपेक्ष्याविनाशिनाम् अतिरोभाविनाम्। प्रकृतौ दर्शयति --- एवं लिङ्गम् इति। तस्मिन् विकारसंज्ञा न त्व् एवं विकारवती चितिशक्तिर् इति भावः। तद् एवं परीक्षकसिद्धां विकृतिं प्रकृतिं चोदाहृत्य विकृताव् एव लोकसिद्धायां गुणविमर्दवैचित्र्यं धर्मलक्षणावस्थापरिणामवैचित्र्यहेतुम् उदाहरति --- तत्रेदम् उदाहरणम् इति। न चायं नियमो लक्षणानाम् एवावस्थापरिणाम इति। सर्वेषाम् एव धर्मलक्षणावस्थाभेदानाम् अवस्थाशब्दवाच्यत्वाद् एक एवावस्थापरिणामः सर्वसाधारण इत्य् आह --- धर्मिणोऽपीति। व्यापकं परिणामलक्षणम् आह --- अवस्थितस्य द्रव्यस्येति। धर्मशब्द आश्रितत्वेन धर्मलक्षणावस्थावाचकः॥3.13॥

शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी॥3.14॥

यस्यैष त्रिविधः परिणामस् तं धर्मिणं सूत्रेण लक्षयति --- तत्र --- शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी। धर्मोऽस्यास्तीति धर्मीति नाविज्ञाते धर्मे स शक्यो ज्ञातुम् इति धर्मं दर्शयति --- योग्यतेति। धर्मिणो द्रव्यस्य मृदादेः शक्तिर् एव चूर्णपिण्डघटाद्युत्पत्तिशक्तिर् एव धर्मस् तेषां तत्राव्यक्तत्वेन भाव इति यावत्। नन्व् एवम् अव्यक्ततया सन्तस् ते ततः प्रादुर्भवन्तु। उदकाहरणादयस् तु तैः स्वकारणाद् अनासादिताः कुतः प्राप्ता इत्य् अत उक्तं --- योग्यतावच्छिन्नेति। योऽसौ घटादीनाम् उत्पत्तिशक्तिः सोदकाहरणादियोग्यतावच्छिन्ना, तेनोदकाहरणादयोऽपि घटादिभिः स्वकारणाद् एव प्राप्ता इति नाकस्मिका इति भावः। अथवा के धर्मिण इत्य् अत्रोत्तरं --- योग्यतावच्छिन्ना धर्मिण इति। को धर्म इत्य् अत्रोत्तरं शक्तिर् एव धर्मस् तेषां योग्यतैव धर्म इत्य् अर्थः। अतस् तद्वान् धर्मीति सिद्धं भवति। तत्सद्भावे प्रमाणम् आह --- स च फलप्रसवभेदानुमित एकस्य धर्मिणोऽन्यश् चान्यश् च चूर्णपिण्डघटादिरूप इत्य् अर्थः। कार्यभेददर्शनाच् च भिन्न इति यावत्। परिदृष्ट उपलब्धः। तत्रानुभवारोहिणो वर्तमानस्य मृत्पिण्डस्य शान्ताव्यपदेश्याभ्यां मृच्चूर्णमृद्घटाभ्यां भेदम् आह --- तत्र वर्तमान इति। यदि न भिद्येत पिण्डवच् चूर्णघटयोर् अपि तद्वद् एव स्वव्यापारव्याप्तिप्रसङ्ग इति भावः। अव्यक्तस्य तु पिण्डस्य नोक्तं भेदसाधनं संभवतीत्य् आह --- यदा त्व् इति। कोऽसौ केन भेदसाधनेन भिद्येतेति। तद् एवं धर्माणां भेदसाधनम् अभिधाय तं भेदं विभजते --- तत्र ये खल्व् इति। उदिता इति वर्तमाना इत्य् अर्थः। अध्वनां पौर्वापर्यं नियमयति --- ते चेति। चोदयति --- किमर्थम् इति। किंनिमित्तम् अतीतस्यानन्तरा न भवन्ति वर्तमानाः। हेतुम् आह सिद्धान्ती --- पूर्वपश्चिमताया अभावात्। विषयेण विषयिणीम् अनुपलब्धिं सूचयति। अनुपलम्भम् एवोपलम्भवैधर्म्येण दर्शयति --- यथानागतवर्तमानयोर् इति। उपसंहरति --- तत् तस्माद् अनागत एव समनन्तरः पूर्वत्वेन भवति वर्तमानस्य नातीतः। अतीतस्य वर्तमानः पूर्वत्वेन समनन्तरो नाव्यपदेश्यः। तस्माद् अध्वनां यविष्ठोऽतीत इति सिद्धम्। स्याद् एतद् अनुभूयमानानुभूततयोदितातीतौ शक्याव् उन्नेतुम् अव्यपदेश्यास् तु पुनर् धर्मा अव्यपदेश्यतयैवं शक्या नोन्नेतुम् इत्य् आशयवान् पृच्छति --- अथाव्यपदेश्याः के केषु समीक्षामहे। अत्रोत्तरम् आह --- सर्वं सर्वात्मकम् इति। यत्रोक्तम् इति। तद् एवोपपादयति --- जलभूम्योर् इति। जलस्य हि रसरूपस्पर्शशब्दवतो भूमेश् च गन्धरसरूपस्पर्शशब्दवत्याः पारिणामिकं वनस्पतिलतागुल्मादिषु मूलफलप्रसवपल्लवादिगतरसादिवैश्वरूप्यं दृष्टम्। सोऽयम् अनेवमात्मिकाया भूमेर् अनीदृशस्य वा जलस्य न परिणामो भवितुम् अर्हति। उपपादितं हि नासद् उत्पद्यत इति। तथा स्थावराणां पारिणामिकं जङ्गमेषु मनुष्यपशुमृगादिषु रसादिवैचित्र्यं दृष्टम्। उपयुञ्जाना हि ते फलादीनि रूपादिभेदसंपदम् आसादयन्ति। एवं जङ्गमानां पारिणामिकं स्थावरेषु दृष्टम्। रुधिरावसेकात् किल दाडिमीफलानि तालफलमात्राणि भवन्ति। उपसंहरति --- एवं सर्वं जलभूम्यादि सर्वरसाद्यात्मकम्। तत्र हेतुम् आह --- जात्यनुच्छेदेन जलत्वभूमित्वादिजातेः सर्वत्र प्रत्यभिज्ञायमानत्वेनानुच्छेदात्। ननु सर्वं चेत् सर्वात्मकं हन्त भोः सर्वस्य सर्वदा सर्वत्र सर्वथा संनिधानात् समानकालं भावानां व्यक्तिः प्रसज्येत, न खलु संनिहिताविकलकारणं कार्यं विलम्बितुम् अर्हतीत्य् अत आह --- देशकालेति। यद्य् अपि कारणं सर्वं सर्वात्मकं तथापि यो यस्य कार्यस्य देशो यथा कुङ्कुमस्य काश्मीरः। तेषां सत्त्वेऽपि पाञ्चालादिषु न समुदाचार इति न कुङ्कुमस्य पाञ्चालादिष्व् अभिव्यक्तिः। एवं निदाघे न प्रावृषः समुदाचार इति न तदा शालीनाम्। एवं न मृगी मनुष्यं प्रसूते न तस्यां मनुष्याकारसमुदाचार इति। एवं नापुण्यवान् सुखरूपं भुङ्क्ते न तस्मिन् पुण्यनिमित्तस्य समुदाचार इति। तस्माद् देशकालाकारनिमित्तानाम् अपबन्धाद् अपगमान् न समानकालम् आत्मनां भावानाम् अभिव्यक्तिर् इति। तद् एवं धर्मान् विभज्य तेषु धर्मिणोऽनुगमं दर्शयति --- य एतेष्व् इति। सामान्यं धर्मिरूपं विशेषो धर्मस् तदात्मोभयात्मक इत्य् अर्थः। तद् एवम् अनुगतं धर्मिणं दर्शयित्वा तम् अनिच्छतो वैनाशिकस्य क्षणिकं विज्ञानमात्रं चित्तम् इच्छतोऽनिष्टप्रसङ्गम् उक्तं स्मारयति --- यस्य त्व् इति। वस्तुप्रत्यभिज्ञानाच् चेति। न हि देवदत्तेन दृष्टं यज्ञदत्तः प्रत्यभिजानाति। तस्माद् यश् चानुभविता स एव प्रत्यभिज्ञातेति॥3.14॥

क्रमान्यत्वं परिणामान्यत्वे हेतुः॥3.15॥

क्रमान्यत्वं परिणामान्यत्वे हेतुः। किम् एकस्य धर्मिण एक एव धर्मलक्षणावस्थालक्षणः परिणाम उत बहवो धर्मलक्षणावस्थालक्षणाः परिणामाः। तत्र किं प्राप्तम् एकत्वाद् धर्मिण एक एव परिणामः। न हि एकरूपात् कारणात् कार्यभेदो भवितुम् अर्हति तस्याकस्मिकत्वप्रसङ्गाद् इत्येवं प्राप्त उच्यते --- क्रमान्यत्वात् परिणामान्यत्वम्। एकस्या मृदश् चूर्णपिण्डघटकपालकणाकारा परिणतिपरम्परा क्रमवती लौकिकपरीक्षकैर् अध्यक्षं समीक्ष्यते। अन्यच् चेदं चूर्णपिण्डयोर् आनन्तर्यम् अन्यच् च पिण्डघटयोर् अन्यच् च घटकपालयोर् अन्यच् च कपालकणयोर् एकत्र परस्यान्यत्र पूर्वत्वात्। सोऽयं क्रमभेदः परिणाम एकस्मिन्न् अवकल्पमानः परिणामभेदम् आपादयति। एकोऽपि च मृद्धर्मी क्रमोपनिपातितत्तत्सहकारिसमवधानक्रमेण क्रमवतीं परिणामपरम्पराम् उद्वहन् नैनाम् आकस्मिकयतीति भावः। धर्मपरिणामान्यत्ववल्

लक्षणपरिणामान्यत्वे ऽवस्थापरिणामान्यत्वे च समानं क्रमान्यत्वं हेतुर् इति। तद् एतद् भाष्येणावद्योत्यते --- एकस्य धर्मिण इति। क्रमक्रमवतोर् अभेदम् आस्थाय स तस्य क्रम इत्य् उक्तम्। तथावस्थापरिणामक्रम इति। तथा हि --- कीनाशेन कोष्ठागारे प्रयत्नसंरक्षिता अपि हि व्रीहयो हायनैर् अतिबहुभिः पाणिस्पर्शमात्रविशीर्यमाणावयवसंस्थानाः परमाणुभावम् अनुभवन्तो दृश्यन्ते। न चायम् अभिनवानाम् अकस्माद् एव प्रादुर्भवितुम् अर्हति। तस्मात् क्षणपरम्पराक्रमेण सूक्ष्मसूक्ष्मतरसूक्ष्मतमबृहद्बृहत्तरबृहत्तमादिक्रमेण प्राप्तेषु विशिष्टोऽयं लक्ष्यत इति। तद् इदं क्रमान्यत्वं धर्मधर्मिभेदपक्ष एवेत्य् आह --- त एत इति। आ विकारेभ्य आ चालिङ्गाद् आपेक्षिको धर्मधर्मिभावो मृदादेर् अपि तन्मात्रापेक्षया धर्मत्वाद् इत्य् आह --- धर्मो ऽपीति। यदा परमार्थधर्मिण्य् अलिङ्गेऽभेदोपचारप्रयोगस् तद्द्वारेण सामानाधिकरण्यद्वारेण धर्म्य् एव धर्म इति यावत्। तदैक एव परिणामो धर्मिपरिणाम एवेत्य् अर्थः। धर्मलक्षणावस्थानां धर्मिस्वरूपाभिनिवेशात्। तद् अनेन धर्मिणो दूरोत्सारितं कूटस्थनित्यत्वम् इत्य् उक्तप्रायम्। धर्मपरिणामं प्रतिपादयन् प्रसङ्गेन चित्तधर्माणां प्रकारभेदम् आह --- चित्तस्येति। परिदृष्टाः प्रत्यक्षा अपरिदृष्टाः परोक्षास् तत्र प्रत्ययात्मकाः प्रमाणादयो रागादयश् च। वस्तुमात्रा इत्य् अप्रकाशरूपताम् आह। स्याद् एतद् अपरिदृष्टाश् चेन् न सन्त्य् एवेत्य् अत आह --- अनुमानेन प्रापितो वस्तुमात्रेण सद्भावो येषां ते तथोक्ताः। पश्चान्मानसाधर्म्याद् आगमोऽप्य् अनुमानम्। सप्तापरिदृष्टान् कारिकया संगृह्णाति --- निरोधेति। निरोधो वृत्तीनाम् असंप्रज्ञातावस्था चित्तस्यागमतः संस्कारशेषभावोऽनुमानतश् च समधिगम्यते। धर्मग्रहणेन पुण्यापुण्ये उपलक्षयति। क्वचित् कर्मेति पाठस् तत्रापि तज्जनिते पुण्यापुण्ये एव गृह्येते। ते चागमतः सुखदुःखोपभोगदर्शनाद् वानुमानतो गम्येते। संस्कारस् तु स्मृतेर् अनुमीयते। एवं त्रिगुणत्वाच् चित्तस्य चलं च गुणवृत्तम् इति प्रतिक्षणं परिणामोऽनुमीयते। एवं जीवनं प्राणधारणं प्रयत्नभेदोऽसंविदितश् चित्तस्य धर्मः श्वासप्रश्वासाभ्याम् अनुमीयते। एवं चेतसश् चेष्टा क्रिया यथा यथा तैस् तैर् इन्द्रियैः शरीरप्रदेशैर् वा संप्रयुज्यते। सापि तत्संयोगाद् एवानुमीयते। एवं शक्तिर् अप्य् उद्भूतानां कार्याणां सूक्ष्मावस्था चेतसो धर्मस्थूलकार्यानुभवाद् एवानुमीयत इति॥3.15॥

परिणामत्रयसंयमाद् अतीतानागतज्ञानम्॥3.16॥

अतः परम् आ पादपरिसमाप्तेः संयमविषयस् तद्वशीकारसूचनी विभूतिश् च वक्तव्या। तत्रोक्तप्रकारं परिणामत्रयम् एव तावत् प्रथमम् उपात्तसकलयोगाङ्गस्य योगिनः संयमविषयतयोपक्षिपति --- परिणामत्रयसंयमाद् अतीतानागतज्ञानम्। ननु यत्र संयमस् तत्रैव साक्षात्करणं तत् कथं परिणामत्रयसंयमोऽतीतानागतं साक्षात्कारयेद् इत्य् अत आह --- तेन परिणामत्रयं साक्षात्क्रियमाणं तेषु परिणामेष्व् अनुगते ये अतीतानागते तद्विषयं ज्ञानं संपादयति। परिणामत्रयसाक्षात्करणम् एव तदन्तर्भूतातीतानागतसाक्षात्करणात्मकम् इति न विषयभेदः संयमसाक्षात्कारयोर् इत्य् अर्थः॥3.16॥

शब्दार्थप्रत्ययानाम् इतरेतराध्यासात् संकरस् तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्॥3.17॥

अयम् अपरः संयमस्य विषय उपक्षिप्यते --- शब्दार्थप्रत्ययानाम् इतरेतराध्यासात् संकरस् तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्। अत्र वाचकं शब्दम् आचिख्यासुः प्रथमं तावद् वाग्व्यापारविषयम् आह --- तत्र वाग् वागिन्द्रियं वर्णव्यञ्जकम् अष्टस्थानम्। यथाह ---

"अष्टौ स्थानानि वर्णानाम् उरः कण्ठः शिरस् तथा। जिह्वामूलं च दन्ताश् च नासिकौष्ठौ च तालु च" [पाणिनीयशिक्षा 13] इति॥

सा वाग् वर्णेष्व् एव यथालोकप्रतीतिसिद्धेष्व् अर्थवती न च वाचक इत्य् अर्थः। श्रोत्रव्यापारविषयं निरूपयति --- श्रोत्रं पुनर् ध्वनेर् उदानस्य वागिन्द्रियाभिघातिनो यः परिणतिभेदो वर्णात्मा तेनाकारेण परिणतं तन्मात्रविषयं न तु वाचकविषयम् इत्य् अर्थः। यथालोकप्रतीतिसिद्धेभ्यो वर्णेभ्यो वाचकं भिनत्ति --- पदं पुनर् वाचकं पुनर् नादानुसंहारबुद्धिनिर्ग्राह्यं यथाप्रतीतिसिद्धान् नादान् वर्णान् प्रत्येकं गृहीत्वानु पश्चाद् या संहरत्य् एकत्वम् आपादयति गौर् इत्य् एतद् एकं पदम् इति तया पदं गृह्यते। यद्य् अपि प्राच्योऽपि बुद्धयो वर्णाकारं पदम् एव प्रत्येकं गोचरयन्ति तथापि न विशदं प्रथते। चरमे तु विज्ञाने तद् अतिविशदम् इति नादानुसंहारबुद्धिनिर्ग्राह्यम् उक्तम्। यस् तु वैजात्याद् एकपदानुभवम् अविज्ञाय वर्णान् एव वाचकान् आतिष्ठते तं प्रत्याह --- वर्णा इति। ते खल्व् अमी वर्णाः प्रत्येकं वाच्यविषयां धियम् आदधीरन् नागदन्तका इव शिक्यावलम्बनं संहता वा ग्रावाण इव पिठरधारणम्। न तावत् प्रथमः कल्पः। एकस्माद् अर्थप्रतीतेर् अनुत्पत्तेर् उत्पत्तौ वा द्वितीयादीनाम् अनुच्चारणप्रसङ्गो निष्पादितक्रिये कर्मणि विशेषानाधायिनः साधनस्य साधनन्यायातिपातात्। तस्माद् द्वितीयः परिशिष्यते। संभवति हि ग्राव्णां संहतानां पिठरधारणम् एकसमयभावित्वात्। वर्णानां तु यौगपद्यासंभवोऽतः परस्परम् अनुग्राह्यानुग्राहकत्वायोगात् संभूयापि नार्थधियम् आदधते। ते पदरूपम् एकम् असंस्पृशन्तस् तादात्म्येनात एवानुपस्थापयन्त आविर्भूतास् तिरोभूता अयःशलाकाकल्पाः प्रत्येकम् अपदस्वरूपा उच्यन्ते। यदि पुनः पदम् एकं तादात्म्येन स्पृशेयुर् वर्णास् ततो नोक्तदोषप्रसङ्ग इत्य् आह --- वर्णः पुनर् एकैकः पदात्मा सर्वाभिधानशक्तिप्रचितः सर्वाभिर् अभिधानशक्तिभिर् निचितो गोगणगौरनगेत्यादिषु हि गकारो गोत्वाद्यर्थाभिधायिषु दृष्ट इति तत्तदभिधानशक्तिः। एवं सोमशोचिर् इत्यादिष्व् ईश्वराद्यर्थाभिधायिषु पदेष्व् ओवर्णो दृष्ट इति सोऽपि तत्तदभिधानशक्तिः। एवं सर्वत्रोहनीयम्। स चैकैको वर्णो गकारादिः सहकारि यद् वर्णान्तरम् ओकारादि तद् एव प्रतियोगि प्रतिसंबन्धि यस्य स तथोक्तस् तस्य भावस् तत्त्वं तस्माद् वैश्वरूप्यं नानात्वम् इवापन्नो न तु नानात्वम् आपन्नस् तस्य तत्त्वाद् एव पूर्वो वर्णो गकार उत्तरेणौकारेण गणादिपदेभ्यो व्यावर्त्योत्तरश् चौकारो गकारेण शोचिरादिपदेभ्यो व्यावर्त्य विशेषे गोत्ववाचके गोपदस्फोटेऽवस्थापितोऽनुसंहारबुद्धौ। अयम् अभिसंधिः --- अर्थप्रत्ययो हि वर्णैर् नियतक्रमतया परस्परम् असंभवद्भिर् अशक्यः कर्तुम्। न च संस्कारद्वाराग्नेयादीनाम् इव परमापूर्वे वा स्वर्गे वा जनयितव्येऽनियतक्रमाणाम् अपि साहित्यम् अर्थबुद्ध्युपजनने वर्णानाम् इति सांप्रतं

विकल्पासहत्वात्। स खल्व् अयं वर्णानुभवजन्यः संस्कारः स्मृतिप्रसवहेतुर् अन्यो वाग्नेयादिजन्य इवापूर्वाभिधानो न तावद् अनन्तरः कल्पनागौरवापत्तेः। स एव तावद् अदृष्टपूर्वः कल्पनीयस् तस्य च क्रमवद्भिर् वर्णानुभवैर् एकस्य जन्यत्वं न संभवतीति तज्जातीयानेकावान्तरसंस्कारकल्पनेति गौरवम्। न चैष ज्ञापकहेत्वङ्गम् अज्ञातस् तदङ्गताम् अनुभवतीति। न खलु संबन्धोऽर्थप्रत्यायनाङ्गम् अज्ञातोऽङ्गताम् उपैति। स्मृतिफलप्रसवानुमितस् तु संस्कारः स्वकारणानुभवविषयनियतो न विषयान्तरे प्रत्ययम् आधातुम् उत्सहते। अन्यथा यत् किंचिद् एवैकैकम् अनुभूय सर्वः सर्वं जानीयाद् इति। न च प्रत्येकवर्णानुभवजनितसंस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णाः समधिगतसहभावा वाचका इति सांप्रतम्। क्रमाक्रमविपरीतक्रमानुभूतानां तत्राविशेषेणार्थधीजननप्रसङ्गात्। न चैतत् स्मरणज्ञानं पूर्वानुभववर्तिनीं परापरतां गोचरयितुम् अर्हति। तस्माद् वर्णेभ्योऽसंभवन्न् अर्थप्रत्यय एकपदानुभवम् एव स्वनिमित्तम् उपकल्पयति। न चैष पदेऽपि प्रसङ्गः। तद् धि प्रत्येकम् एव प्रयत्नभेदभिन्ना ध्वनयो व्यञ्जयन्तः परस्परविसदृशतत्तत्पदव्यञ्जकध्वनिभिस् तुल्यस्थानकरणनिष्पन्नाः सदृशाः सन्तो ऽन्योन्यविसदृशैः पदैः पदम् एकं सदृशम् आपादयन्तः प्रतियोगिभेदेन तत्तत्सादृश्यानां भेदात् तदुपधानाद् एकम् अप्य् अनवयवम् अपि सावयवम् इवानेकात्मकम् इवावभासयन्ति, यथा नियतवर्णपरिमाणसंस्थानं मुखम् एकम् अपि मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणसंस्थानम् अनेकम् आदर्शयन्ति न परमार्थतः। सादृश्योपधानभेदकल्पिता भागा एव निर्भागस्य पदस्य वर्णास् तेन तद्बुद्धिर् वर्णात्मना पदभेदे स्फोटम् अभेदम् एव निर्भागम् एव सभेदम् इव सभागम् इवालम्बते। अतो गोपदस्फोटभेदस्यैकस्य गकारभागो गौरादिपदस्फोटसादृश्येन न निर्धारयन्ति स्वभागिनम् इत्य् ओकारेण विशिष्टो निर्धारयत्य् एवम् ओकारो ऽपि भागः शोचिरादिपदसदृशतया न शक्तो निर्धारयितुं स्वभागिनं गोपदस्फोटम् इति गकारेण विशिष्टो निर्धारयति। असहभाविनाम् अपि च संस्कारद्वारेणास्ति सहभाव इति विशेषणविशेष्यभावोपपत्तिः। न च भिन्नविषयत्वं संस्कारयोर् भागद्वयविषययोर् अनुभवयोस् तज्जन्मनोश् च संस्कारयोर् एकपदविषयत्वात्। केवलभागानुभवेन पदम् अव्यक्तम् अनुभूयतेऽनुसंहारधिया तु भागानुभवयोनिसंस्कारलब्धजन्मना व्यक्तम् इति विशेषः। अव्यक्तानुभवाश् च प्राञ्चः संस्काराधानक्रमेण व्यक्तम् अनुभवम् आदधाना दृष्टा यथा दूराद् वनस्पताव् अस्तिप्रत्यया अव्यक्ता व्यक्तवनस्पतिप्रत्ययहेतवः। न चेयं विधा वर्णानाम् अर्थप्रत्यायने संभविनी। नो खलु वर्णाः प्रत्येकम् अव्यक्तम् अर्थप्रत्ययम् आदधत्य् अन्ते व्यक्तम् इति शक्यं वक्तुम्। प्रत्यक्षज्ञान एव नियमाद् व्यक्ताव्यक्तत्वस्य। वर्णाधेयस् त्व् अर्थप्रत्ययो न प्रत्यक्षस् तद् एष वर्णेभ्यो जायमानः स्फुट एव जायेत। न वा जायेत न त्व् अस्फुटः। स्फोटस्य तु ध्वनिव्यङ्ग्यस्य प्रत्यक्षस्य सतः स्फुटास्फुटत्वे कल्प्येते इत्य् असमानम्। एवं प्रत्येकवर्णानुभवजनितसंस्कारसहितश्रोत्रलब्धजन्मन्य् अनुसंहारबुद्धौ संहता वर्णा एकपदस्फोटभावम् आपन्नाः प्रयत्नविशेषव्यङ्ग्यतया प्रयत्नविशेषस्य च नियतक्रमापेक्षतया क्रमस्यान्यत्वे तदभिव्यञ्जकप्रयत्नविशेषाभावेन तदभिव्यक्त्यभावप्रसङ्गात् क्रमानुरोधिनो ऽर्थसंकेतेनावच्छिन्नाः संकेतावच्छेदम् एव लौकिकं सभागपदविषयं दर्शयन्ति, इयन्तो द्वित्रास् त्रिचतुराः पञ्चषा वा एते सर्वाभिधानशक्तिपरिवृता गकारौकारविसर्जनीयाः सास्नादिमन्तम् अर्थम् अवद्योतयन्तीति। तत् किम् इदानीं संकेतानुसारेण वर्णानाम् एव वाचकत्वं तथा च न पदं नाम किंचिद् एकम् इत्य् अत आह --- तद् एतेषाम् इति। ध्वनिनिमित्तः क्रमो ध्वनिक्रमः। उपसंहृतो ध्वनिक्रमो येषु ते तथोक्ताः। बुद्ध्या निर्भास्यते प्रकाश्यत इति बुद्धिनिर्भासः। संकेतावच्छिन्नाः स्थूलदर्शिलोकाशयानुरोधेन गकारौकारविसर्जनीया इत्य् उक्तम्। गकारादीनाम् अपि तद्भागतया तादात्म्येन वाचकत्वात् प्रतीत्यनुसारतस् त्व् एकम् एव पदं वाचकम् इत्य् अर्थः। एतद् एव स्पष्टयति --- तद् एकं पदं लोकबुद्ध्या प्रतीयत इति संबन्धः। कस्माद् एकम् इत्य् अत आह --- एकबुद्धिविषयो गौर् इत्य् एकं पदम् इत्य् एकाकाराया बुद्धेर् विषयो यतस् तस्माद् एकम्। तस्य व्यञ्जकम् आह --- एकप्रयत्नाक्षिप्तम् इति। रस इतिपदव्यञ्जकात् प्रयत्नाद् विलक्षणः सर इतिपदव्यञ्जकः प्रयत्नः। स चोपक्रमतः सर इतिपदव्यक्तिलक्षणफलावच्छिन्नः पूर्वापरीभूत एकस् तदाक्षिप्तं भागानां सादृश्योपधानभेदकल्पितानां परमार्थसताम् अभावाद् अभागम्। अत एव पूर्वापरीभूतभावाद् अक्रमम्। ननु वर्णाः पूर्वापरीभूतास् ते चास्य भागा इति कथम् अक्रमम् अभागं चेत्य् अत आह --- अवर्णम्। न ह्य् अस्य वर्णा भागाः किं तु सादृश्योपधानभेदात् पदम् एव तेन तेनाकारेणापरमार्थसता प्रथते। न हि मणिकृपाणदर्पणादिवर्तीनि मुखानि मुखस्य परमार्थसतोऽवयवा इति। बौद्धम् अनुसंहारबुद्धौ विदितम् अन्त्यवर्णप्रत्ययस्य व्यापारः संस्कारः पूर्ववर्णानुभवजनितसंस्कारसहितस् तेनोपस्थापितं विषयीकृतम्। वर्णानुभवतत्तत्संस्काराणां च पदविषयत्वम् उपपादितम् अधस्तात्। स्याद् एतद् अभागम् अक्रमम् अवर्णं चेत् पदतत्वं कस्माद् एवंविधं कदाचिन् न प्रथते न हि लाक्षारसावसेकोपधानापादितारुणभावः स्फटिकमणिस् तदपगमे स्वच्छधवलो नानुभूयते तस्मात् पारमार्थिका एव वर्णा इत्य् अत आह --- परत्रेति। प्रतिपिपादयिषया वर्णैर् एवाभिधीयमानैर् उच्चार्यमाणैः श्रूयमाणैश् च श्रोतृभिर् अनादिर् यो ऽयं वाग्व्यवहारो विभक्तवर्णपदनिबन्धनस् तज्जनिता वासना साप्य् अनादिर् एव। तदनुविद्धया तद्वासितया लोकबुद्ध्या विभक्तवर्णरूषितपदावगाहिन्या सिद्धवत् परमार्थवत् संप्रतिपत्त्या संवादेन वृद्धानां पदं प्रतीयते। एतद् उक्तं भवति --- अस्ति कश्चिद् उपाधिर् य उपधेयेन संयुज्यते वियुज्यते च। यथा लाक्षादिस् तत्र तद्वियोगे स्फटिकः स्वाभाविकेन स्वच्छधवलेन रूपेण प्रकाशत इति युज्यते। पदप्रत्ययस्य तु प्रयत्नभेदोपनीतध्वनिभेदाद् अन्यतोऽनुत्पादात् तस्य च सदा सादृश्यदोषरूषिततया वर्णात्मनैव प्रत्ययजनकत्वम् इति कुतो निरुपाधिनः पदस्य प्रथा। यथाहुः ---

"ध्वनयः सदृशात्मानो विपर्यासस्य हेतवः। उपलम्भकम् एतेषां विपर्यासस्य कारणम्। उपायत्वाच् च नियतः पददर्शितदर्शिनाम्। ज्ञानस्यैव च बाधेयं लोके ध्रुवम् उपप्लवः" इति।

यतः पदात्मा विभक्तवर्णरूषितः प्रकाशतेऽतः स्थूलदर्शी लोको वर्णान् एव पदम् अभिमन्यमानस् तान् एव प्रकारभेदभाजोऽर्थभेदे संकेतयतीत्य् आह --- तस्येति। तस्य पदस्याजानत एकस्यापि संकेतबुद्धितः स्थूलदर्शिलोकहिताय वर्णात्मना विभागः। विभागम् आह --- एतावतां न न्यूनानाम् अधिकानां वा, एवंजातीयको नैरन्तर्यक्रमविशेषो ऽनुसंहार एकबुद्ध्युपग्रह एकस्यार्थस्य गोत्वादेर् वाचक इति। ननु यद्य् एकस्यार्थस्यायं शब्दो वाचक इति संकेतो हन्त भोः शब्दार्थयोर् नेतरेतराध्यासस् तर्हीत्य् अत आह --- संकेतस् त्व् इति। स्मृताव् आत्मा स्वरूपं

यस्य स तथोक्तः। न हि कृत इत्य् एव संकेतोऽर्थम् अवधारयत्य् अपि तु स्मर्यमाणः। एतद् उक्तं भवति --- अभिन्नाकार एव संकेते कथंचिद् भेदं विकल्प्य षष्ठी प्रयुक्तेति। य एषां प्रविभागज्ञः स तत्र संयमे भवति सर्ववित् सर्वभूतरुतज्ञ इति। तद् एवं विकल्पितवर्णभागम् एकम् अनवयवं पदं व्युत्पाद्य कल्पितपदविभागं वाक्यम् एकम् अनवयवं व्युत्पादयितुम् आह --- सर्वपदेषु चास्ति वाक्यशक्तिः। अयम् अभिसंधिः --- परप्रत्यायनाय शब्दः प्रयुज्यते तत्र तद् एव च परं प्रति प्रतिपादयितव्यं यत् तैः प्रतिपित्सितं, तद् एव तैः प्रतिपित्सितं यदुपादानादिगोचरः। न च पदार्थमात्रं तद्गोचरः किं तु वाक्यार्थ इति वाक्यार्थपरा एव सर्वे शब्दास् तेन स एव तेषाम् अर्थः। अतो यत्रापि केवलस्य पदस्य प्रयोगस् तत्रापि पदान्तरेण सहैकीकृत्य ततोऽर्थो गम्यते, न तु केवलात् कस्मात् तन्मात्रस्यासामर्थ्यात् तथा च वाक्यम् एव तत्र तत्र वाचकं न तु पदानि। तद्भागतया तु तेषाम् अप्य् अस्ति वाक्यार्थवाचकशक्तिः पदार्थ इव पदभागतया वर्णानाम्। तेन यथा वर्ण एकैकः सर्वपदार्थाभिधानशक्तिः प्रचित एवं पदम् अप्य् एकैकं सर्ववाक्यार्थाभिधानशक्तिप्रचितम्। तद् इदम् उक्तम् --- सर्वपदेषु चास्ति वाक्यशक्तिर् वृक्ष इत्य् उक्ते ऽस्तीति गम्यते। अध्याहृतास्तिपदसहितं वृक्ष इति पदं वाक्यार्थे वर्तत इति तद्भागत्वाद् वृक्षपदं तत्र वर्तते। कस्मात् पुनर् अस्तीति गम्यत इत्य् अत आह --- न सत्तां पदार्थो व्यभिचरतीति। लोक एव हि पदानाम् अर्थावधारणोपायः। स च केवलं पदार्थम् अस्त्यर्थेनाभिसमस्य सर्वत्र वाक्यार्थी करोति सोऽयम् अव्यभिचारः सत्तया पदार्थस्यात एव शब्दवृत्तिविदां व्यवहारो यत्रान्यत् क्रियापदं नास्ति तत्रास्तिर् भवन्तीपरः प्रयोक्तव्य इति। क्रियाभेदाव्यभिचारि प्रातिपदिकम् उक्त्वा क्रियाभेदं कारकाव्यभिचारिणं दर्शयति --- तथा च पचतीत्य् उक्त इति। पचतीत्य् उक्ते हि कारकमात्रस्य तदन्वययोग्यस्यावगमाद् अन्यव्यावृत्तिपरस् तद्भेदानाम् अनुवादः। तद् एवं भेद एव वाक्यार्थ इति तथानपेक्षम् अपि पदं वाक्यार्थे वर्तमानं दृश्यत इति सुतराम् अस्ति वाक्यशक्तिः पदानाम् इत्य् आह --- दृष्टं चेति। न चैतावतापि श्रोत्रियादिपदस्य स्वतन्त्रस्यैवंविधार्थप्रत्यायनं न यावद् अस्त्यादिभिर् अभिसमासोऽस्य भवति। तथा चास्यापि वाक्यावयवत्वात् कल्पितत्वम् एवेति भावः। स्याद् एतत् पदानाम् एव चेद् वाक्यशक्तिः कृतं तर्हि वाक्येन तेभ्य एव तदर्थावसायाद् इत्य् अत आह --- तत्र वाक्य इति। उक्तम् एतन् न केवलात् पदात् पदार्थः प्रतिपित्सितः प्रतीयते न यावद् एतत् पदान्तरेणाभिसमस्यत इति। तथा च वाक्यात् पदान्य् अपोद्धृत्य कल्पितानि वाक्यार्थाच् चापोद्धृत्य तदेकदेशं कारकं वा क्रियां वा तत्पदं प्रकृत्यादिविभागकल्पनया व्याकरणीयम् अन्वाख्येयम्। किमर्थं पुनर् एतावता क्लेशेनान्वाख्यायत इत्य् अत आह --- अन्यथेति। घटो भवति भवति भिक्षां देहि भवति तिष्ठतीति नामाख्यातयोश् च साम्यात्। एवम् अश्वस् त्वम् अश्वो यातीति। एवम् अजापयः पिब, अजापयः शत्रून् इति नामाख्यातसारूप्याद् अनिर्ज्ञातं नामत्वेनाख्यातत्वेन वान्वाख्यानाभावे निष्कृष्याज्ञातं कथं क्रियायां कारके वा व्याक्रियेत। तस्माद् वाक्यात् पदान्य् अपोद्धृत्य व्याख्यातव्यानि। न त्व् अन्वाख्यानाद् एव पारमार्थिको विभागः पदानाम् इति। तद् एवं शब्दरूपं व्युत्पाद्य शब्दार्थप्रत्ययानां संकेतापादितसंकराणाम् असंकरम् आख्यातुम् उपक्रमते --- तेषां शब्दार्थप्रत्ययानां प्रविभागस् तद्यथा श्वेतते प्रासाद इति क्रियार्थः शब्दः। स्फुटतरो ह्य् अत्र पूर्वापरीभूतायाः क्रियायाः साध्यरूपायाः सिद्धरूपः क्रियार्थः श्वेतत इति भिन्नः शब्दः। यत्रापि शब्दार्थयोः सिद्धरूपत्वं तत्राप्य् अर्थाद् अस्ति शब्दस्य भेद इत्य् आह --- श्वेतः प्रासाद इतङ् कारकार्थः शब्दः। अभिहितत्वाच् च कारकविभक्तेर् अभावः। अर्थं विभजते --- क्रियाकारकात्मा तदर्थस् तयोः शब्दयोर् अर्थः क्रियात्मा कारकात्मा च। प्रत्ययं विभजते --- प्रत्ययश् चेति। चशब्देन तदर्थ इत्य् एतत् पदम् अत्रानुकृष्यते। तद् अत्रान्यपदार्थप्रधानं संबध्यते। स एव क्रियाकारकात्मार्थो यस्य स तथोक्तः। नन्व् अभेदेन प्रतीतेः शब्दार्थप्रत्ययानां संकरात् कुतः प्रविभाग इत्य् आशयवान् पृच्छति --- कस्माद् इति। उत्तरम् आह --- सोऽयम् इत्य् अभिसंबन्धाद् इति। संकेतोपाधिर् एकाकारप्रत्ययो न तु तात्त्विक इत्य् अर्थः। संकेतस्य निमित्तता दर्शिता संकेत इति सप्तम्या। परमार्थम् आह --- यस् तु श्वेतोऽर्थ इति। अवस्था नवपुराणत्वादयः। सहगतः संकीर्णः। एवं च प्रविभागसंयमाद् योगिनः सर्वेषां भूतानां पशुमृगसरीसृपवयःप्रभृतीनां यानि रुतानि तत्राप्य् अव्यक्तं पदं तदर्थस् तत्प्रत्ययश् चेति। तद् इह मनुष्यवचनवाच्यप्रत्ययेषु कृतः संयमः समानजातीयतया तेष्व् अपि कृत एवेति। तेषां रुतं तदर्थभेदं तत्प्रत्ययं च योगी जानातीति सिद्धम्॥3.17॥

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्॥3.18॥

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्। ज्ञानजा हि संस्काराः स्मृतेर् हेतवोऽविद्यादिसंस्कारा अविद्यादीनां क्लेशानां हेतवः। विपाको जात्यायुर्भोगरूपस् तस्य हेतवो धर्माधर्मरूपाः। पूर्वेषु भवेष्व् अभिसंस्कृता निष्पादिताः स्वकारणैर् यथासंस्कृतं व्यञ्जनं कृतम् इति गम्यते। परिणामचेष्टानिरोधशक्तिजीवनान्य् एव धर्माश् चित्तस्य तद्वद् अपरिदृष्टाश् चित्तधर्मास् तेषु श्रुतेष्व् अनुमितेषु सपरिकरेषु संयमः संस्काराणां द्वयेषां साक्षात्क्रियायै समर्थः। अस्तु तत्र संयमात् तत्साक्षात्कारः पूर्वजातिसाक्षात्कारस् तु कुत इत्य् अत आह --- न च देशेति। निमित्तं पूर्वशरीरम् इन्द्रियादि च। सानुबन्धसंस्कारसाक्षात्कार एव नान्तरीयकतया जात्यादिसाक्षात्कारम् आक्षिपतीत्य् अर्थः। स्वसंस्कारसंयमं परकीयेष्व् अतिदिशति --- परत्राप्य् एवम् इति। अत्र श्रद्धोत्पादे हेतुम् अनुभवत आवट्यस्य जैगीषव्येण संवादम् उपन्यस्यति --- अत्रेदम् आख्यानं श्रूयत इति। महाकल्पो महासर्गः। तनुधर इति निर्माणकायसंपद् उक्ता। भव्यः शोभनो विगलितरजस्तमोमल इत्य् अर्थः। प्रधानवशित्वम् अइश्वर्यं तेन हि प्रधानं विक्षोभ्य यस्मै यादृशीं कायेन्द्रियसंपदं दित्सति तस्मै तादृशीं दत्ते। स्वकीयानि च कायेन्द्रियसहस्राणि निर्मायान्तरिक्षे दिवि भुवि च यथेच्छं विहरतीति। संतोषो हि तृष्णाक्षयो बुद्धिसत्त्वस्य प्रशान्तता धर्मः॥3.18॥

प्रत्ययस्य परचित्तज्ञानम्॥3.19॥

प्रत्ययस्य परचित्तज्ञानम्। परप्रत्ययस्य चित्तमात्रस्य साक्षात्करणाद् इति॥3.19॥

न च तत् सालम्बनं तस्याविषयीभूतत्वात्॥3.20॥

यथा संस्कारसाक्षात्कारस् तदनुबन्धपूर्वजन्मसाक्षात्कारम् आक्षिपत्य् एवं परचित्तसाक्षात्कारोऽपि तदालम्बनसाक्षात्कारम् आक्षिपेद् इति प्राप्त आह --- न च तत् सालम्बनं तस्याविषयीभूतत्वात्। सानुबन्धसंस्कारविषयो ऽसौ संयमोऽयं तु परचित्तमात्रविषय इत्य् अभिप्रायः॥3.20॥

कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासंप्रयोगेऽन्तर्धानम्॥3.21॥

कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशसंप्रयोगेऽन्तर्धानम्। पञ्चात्मकः कायः। स च रूपवत्तया चाक्षुषो भवति। रूपेण हि कायश् च तद्रूपं च चक्षुर्ग्रहणकर्मशक्तिम् अनुभवति। तत्र यदा रूपे संयमविशेषो योगिना क्रियते तदा रूपस्य ग्राह्यशक्ती रूपवत्कायप्रत्यक्षताहेतुः स्तम्भ्यते। तस्माद् ग्राह्यशक्तिस्तम्भे सत्य् अन्तर्धानं योगिनस् ततः परकीयचक्षुर्जनितेन प्रकाशेन ज्ञानेनासंप्रयोगश् चक्षुर्ज्ञानाविषयत्वं योगिनः कायस्येति यावत्। तस्मिन् कर्तव्येऽन्तर्धानं कारणम् इत्य् अर्थः। एतेनेति। कायशब्दस्पर्शरसगन्धसंयमात् तद्ग्राह्यशक्तिस्तम्भे श्रोत्रत्वग्रसनघ्राणप्रकाशासंप्रयोगेऽन्तर्धानम् इति सूत्रम् ऊहनीयम्॥3.21॥

सोपक्रमं निरुपक्रमं च कर्म तत्संयमाद् अपरान्तज्ञानम् अरिष्टेभ्यो वा॥3.22॥

सोपक्रमं निरुपक्रमं च कर्म तत्संयमाद् अपरान्तज्ञानम् अरिष्टेभ्यो वा। आयुर्विपाकं च कर्म द्विविधं सोपक्रमं निरुपक्रमं च। यत् खल्व् अइकभविकं कर्म जात्यायुर्भोगहेतुस् तद् आयुर्विपाकम्। तच् च किंचित्कालानपेक्षम् एव भोगदानाय प्रस्थितं दत्तबहुभोगम् अल्पावशिष्टफलं प्रवृत्तव्यापारं केवलं तत्फलस्य सहसा भोक्तुम् एकेन शरीरेणाशक्यत्वाद् विलम्बते तद् इदं सोपक्रमम्। उपक्रमो व्यापारस् तत्सहितम् इत्य् अर्थः। तद् एव तु दत्तस्तोकफलं तत्कालम् अपेक्ष्य फलदानाय व्याप्रियमाणं कादाचित्कमन्दव्यापारं निरुपक्रमम्। एतद् एव निदर्शनाभ्यां विशदयति --- तत्र यथेति। अत्रैवातिवैशद्याय निदर्शनान्तरं दर्शयति --- यथा वाग्निर् इति। परान्तं महाप्रलयम् अपेक्ष्यापरान्तो मरणम्। तस्मिन् कर्मणि धर्माधर्मयोः संयमाद् अपरान्तज्ञानम्। ततश् च योगी सोपक्रमम् आत्मनः कर्म विज्ञाय बहून् कायान् निर्माय सहसा फलं भुक्त्वा स्वेच्छया म्रियते। प्रासङ्गिकम् आह --- अरिष्टेभ्यो वा। अरिवत् त्रासयन्तीत्य् अरिष्टानि त्रिविधानि मरणचिह्नानि। विपरीतं वा सर्वं माहेन्द्रजालादिव्यतिरेकेण ग्रामनगरादि स्वर्गम् अभिमन्यते, मनुष्यलोकम् एव देवलोकम् इति॥3.22॥

मैत्र्यादिषु बलानि॥3.23॥

मैत्र्यादिषु बलानि। मैत्र्यादिषु संयमान् मैत्र्यादिबलान्य् अस्य भवन्ति। तत्र मैत्रीभावनातो बलं येन जीवलोकं सुखाकरोति ततः सर्वहितो भवति। एवं करुणाबलात् प्राणिनो दुःखाद् दुःखहेतोर् वा समुद्धरति। एवं मुदिताबलाज् जीवलोकस्य माध्यस्थ्यम् आधत्ते। वक्ष्यमाणौपयिकं भावनाकारणत्वं समाधेर् आह --- भावनातः समाधिर् यः स संयमः। यद्य् अपि धारणाध्यानसमाधित्रयम् एव संयमो न समाधिमात्रं तथापि समाध्यनन्तरं कार्योत्पादात् समाधएः प्राधान्यात् तत्र संयम उपचरितः। क्वचिद् भावना समाधिर् इति पाठः। तत्र भावनासमाधी समूहस्य संयमस्यावयवौ हेतू भवतः। वीर्यं प्रयत्नः, तेन मैत्र्यादिबलवतः पुंसः सुखितादिषु परेषां कर्तव्येषु प्रयत्नोऽवन्ध्यो भवतीति। उपेक्षौदासीन्यं, न तत्र भावना नापि सुखादिवद् भाव्यं किंचिद् अस्तीति॥3.23॥

बलेषु हस्तिबलादीनि॥3.24॥

बलेषु हस्तिबलादीनि। यस्य बले संयमस् तस्य बलं लभत इति॥3.24॥

प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्॥3.25॥

प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्। सूक्ष्मे व्यवहिते विप्रकृष्टे वार्थे संयमेन विन्यस्य तम् अधिगच्छति॥3.25॥

भुवनज्ञानं सूर्ये संयमात्॥3.26॥

भुवनज्ञानं सूर्ये संयमात्। आ ध्रुवादितो मेरुपृष्ठात्। तद् एवम् अनेन संग्रहश्लोकान्तेन संक्षेपतः सप्त लोकान् उपन्यस्य विस्तरेणाह --- तत्रावीचेर् इति। घनशब्देन पृथिव्य् उच्यते। भूमिः स्थानम् इत्य् अर्थः। एते महानरका अनेकोपनरकपरिवारा बोद्धव्याः। एतान् एव नामान्तरेणोपसंहरति --- महेति। तस्य सूर्यप्रचाराद् रात्रिंदिवं लग्नम् इव वर्तते। यम् एवास्य भागं सूर्यस् त्यजति तत्र रात्रिः। यम् एव भागम् अलंकरोति तत्र दिनम् इति। सकलजम्बूद्वीपपरिमाणम् आह --- तद् एतद् योजनशतसाहस्रम्। किंभूतं योजनानां शतसाहस्रम् इत्य् आह --- सुमेरोर् दिशि दिशि तदर्धेन पञ्चाशद्योजनसहस्रेण व्यूढं संक्षिप्तम्। यतोऽस्य मध्यस्थः सुमेरुः समुद्राश् च सर्षपराशिकल्पा इति द्विगुणा द्विगुणा इति संबन्धः। यथा सर्षपराशिर् न व्रीहिराशिर् इवोच्छ्रितो नापि भूमिसमस् तथा समुद्रा अपीत्य् अर्थः। विचित्रैः शैलैर् अवतंसैर् इव सह वर्तन्त इति सविचित्रशैलावतंसा द्वीपाः। तद् एतत् सर्वं सद्वीपविपिननगनगरनीरधिमालावलयं लोकालोकपरिवृतं विश्वंभरामण्डलं ब्रह्माण्डमध्ये व्यूढं संक्षिप्तं

सुप्रतिष्ठितं संस्थानं संनिवेशो यस्य तत् तथोक्तम्। ये यत्र प्रतिवसन्ति तत्र तान् दर्शयति --- तत्र पाताल इति। सुमेरोः संनिवेशम् आह --- सुमेरुर् इति। तद् एवं भूर्लोकं सप्रकारम् उक्त्वा सप्रकारम् एवान्तरीक्षलोकम् आह --- ग्रहेति। विक्षेपो व्यापारः। स्वर्लोकम् आदर्शयति --- माहेन्द्रनिवासिन इति। देवनिकाया देवजातयः। षण्णाम् अपि देवनिकायानां रूपोत्कर्षम् आह --- सर्वे संकल्पसिद्धा इति। संकल्पमात्राद् एवैषां विषया उपनमन्ति। वृन्दारकाः पूज्याः। कामभोगिनो मैथुनप्रियाः। अउपपादिकदेहाः पित्रोः संयोगम् अन्तरेणाकस्माद् एव दिव्यं शरीरम् एषां धर्मविशेषातिसंस्कृतेभ्योऽणुभ्यो भूतेभ्यो भवतीति। महर्लोकम् आह --- महतीति। महाभूतवशिनः। यद् यद् एतेभ्यो रोचते तत् तद् एव महाभूतानि प्रयच्छन्ति। तदिच्छातश् च महाभूतानि तेन तेन संस्थानेनावतिष्ठन्ते। ध्यानाहारा ध्यानमात्रतृप्ताः पुष्टा भवन्ति। जनलोकम् आह --- प्रथम इत्य् उक्तक्रमेण। भूतेन्द्रियवशिन इति। भूतानि पृथिव्यादीनीन्द्रियाणि श्रोत्रादीनि यथा नियोक्तुम् इच्छन्ति तथैव नियुज्यन्ते। उक्तक्रमापेक्षया द्वितीयं ब्रह्मणस् तपोलोकम् आह --- द्वितीय इति। भूतेन्द्रियप्रकृतिवशिन इति। प्रकृतिः पञ्च तन्मात्राणि तद्वशिनस् तदिच्छातो हि तन्मात्राण्य् एव कायाकारेण परिणमन्त इत्य् आगमिनः। द्विगुणेत्य् आभास्वरेभ्यो द्विगुणायुषो महाभास्वरास् तेभ्यो ऽपि द्विगुणायुषः सत्यमहाभास्वरा इत्य् अर्थः। ऊर्ध्वम् इत्य् ऊर्ध्वं सत्यलोकेऽप्रतिहतज्ञाना अवीचेस् तु प्रभृत्य् आ तपोलोकं सूक्ष्मव्यवहितादि सर्वं विजानन्तीत्य् अर्थः। तृतीयं ब्रह्मणः सत्यलोकम् आह --- तृतीय इति। अकृतो भवनस्य गृहस्य न्यासो यैस् ते तथोक्ताः। आधाराभावाद् एव स्वप्रतिष्ठाः। स्वेषु शरीरेषु प्रतिष्ठा येषां ते तथोक्ताः। प्रधानवशिनस् तदिच्छातः सत्त्वरजस्तमांसि प्रवर्तन्ते यावत्सर्गायुषः। तथा च श्रूयते ---

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" [कूर्मपुराणम् पूर्वखण्डः 12.269] इति॥

तद् एवं चतुर्णां देवनिकायानां साधारणधर्मान् उक्त्वा नामविशेषग्रहणेन धर्मविशेषान् आह --- तत्रेति। अच्युता नाम देवाः स्थूलविषयध्यानसुखास् तेन ते तृप्यन्ति। शुद्धनिवासा नाम देवाः सूक्ष्मविषयध्यानसुखास् तेन ते तृप्यन्ति। सत्याभा नाम देवा इन्द्रियविषयध्यानसुखास् तेन ते तृप्यन्ति। संज्ञासंज्ञिनो नाम देवा अस्मितामात्रध्यानसुखास् तेन ते तृप्यन्ति। त एते सर्वे संप्रज्ञातसमाधिम् उपासते। अथासंप्रज्ञातसमाधिनिष्ठा विदेहप्रकृतिलयाः कस्मान् न लोकमध्ये न्यस्यन्त इत्य् अत आह --- विदेहप्रकृतिलयास् त्व् इति। बुद्धिवृत्तिमन्तो हि दर्शितविषया लोकयात्रां वहन्तो लोकेषु वर्तन्ते। न चैवं विदेहप्रकृतिलयाः सत्य् अपि साधिकारत्व इत्य् अर्थः। तद् एतद् आ सत्यलोकम् आ चावीचेर् योगिना साक्षात्करणीयं, सूर्यद्वारे सुषुम्नायां नाड्याम्। न चैतावतापि तत्साक्षात्कारो भवतीत्य् अत आह --- एवं तावद् अन्यत्रापि सुषुम्नाया अन्यत्रापि योगोपाध्यायोपदिष्टेषु यावद् इदं सर्वं जगद् दृष्टम् इति। बुद्धिसत्त्वं हि स्वभावत एव विश्वप्रकाशनसमर्थं तमोमलावृतं यत्रैव रजसोद्घाट्यते तद् एव प्रकाशयति। सूर्यद्वारसंयमोद्घाटितं तु भुवनं प्रकाशयति। न चैवम् अन्यत्रापि प्रसङ्गस् तत्संयमस्य तावन्मात्रोद्घाटनसामर्थ्याद् इति सर्वम् अवदातम्॥3.26॥

चन्द्रे ताराव्यूहज्ञानम्॥3.27॥

ध्रुवे तद्गतिज्ञानम्॥3.28॥

नाभिचक्रे कायव्यूहज्ञानम्॥3.29॥

कण्ठकूपे क्षुत्पिपासानिवृत्तिः॥3.30॥

कूर्मनाड्यां स्थैर्यम्॥3.31॥

चन्द्रे ताराव्यूहज्ञानम्। ध्रुवे तद्गतिज्ञानम्। नाभिचक्रे कायव्यूहज्ञानम्। कण्ठकूपे क्षुत्पिपासानिवृत्तिः। कूर्मनाड्यां स्थैर्यम्। तत्र तत्र जिज्ञासायां योगिनस् तत्र तत्र संयमः। एवं क्षुत्पिपासानिवृत्तिहेतुः संयमः स्थैर्यहेतुश् च सूत्रपदैर् उपदिष्टो भाष्येण च निगदव्याख्यातेन व्याख्यात इति न व्याख्यातः॥3.27॥3.28॥3.29॥3.30॥3.31॥

मूर्धज्योतिषि सिद्धदर्शनम्॥3.32॥

मूर्धज्योतिषि सिद्धदर्शनम्। मूर्धशब्देन सुषुम्ना नाडी लक्ष्यते तत्र संयम इति॥3.32॥

प्रातिभाद् वा सर्वम्॥3.33॥

प्रातिभाद् वा सर्वम्। प्रतिभोहस् तद्भवं प्रातिभम्। प्रसंख्यानहेतुसंयमवतो हि तत्प्रकर्षे प्रसंख्यानोदयपूर्वलिङ्गं यद् ऊहजं ज्ञानं तेन सर्वं विजानाति योगी। तच् च प्रसंख्यानसंनिधापनेन संसारात् तारयतीति तारकम्॥3.33॥

हृदये चित्तसंवित्॥3.34॥

हृदये चित्तसंवित्। हृदयपदं व्याचष्टे --- यद् इदम् अस्मिन् ब्रह्मपुरे। बृहत्वाद् आत्मा ब्रह्म तस्य पुरं निलयस् तद् धि तत्र विजानाति स्वम् इति। दहरं गर्तं तद् एव पुण्डरीकम् अधोमुखं वेश्म मनसः। चित्तसंवेदनत्वे हेतुम् आह --- तत्र विज्ञानं तत्र संयमाच् चित्तं विजानाति स्ववृत्तिविशिष्टम्॥ 3.34॥

सत्त्वपुरुषयोर् अत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात् स्वार्थसंयमात् पुरुषज्ञानम्॥3.35॥

सत्त्वपुरुषयोर् अत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात् स्वार्थसंयमात् पुरुषज्ञानम्। यत्र प्रकाशरूपस्यातिस्वच्छस्य नितान्ताभिभूतरजस्तमस्तया विवेकख्यातिरूपेण परिणतस्य बुद्धिसत्त्वस्यात्यन्तिकश् चैतन्याद् असंकरस् तत्र कैव कथा रजस्तमसोर् जडस्वभावयोर् इत्य् आशयवान् सूत्रकारः सत्त्वपुरुषयोर् इत्य् उवाच। इमम् एवाभिप्रायं गृहीत्वा भाष्यकारो ऽप्य् आह --- बुद्धिसत्त्वं प्रख्याशीलम् इति। न प्रख्याशीलमात्रम् अपि तु विवेकख्यातिरूपेण परिणतम् अतो नितान्तशुद्धप्रकाशतयात्यन्तसारूप्यं चैतन्येनेति संकर इत्य् अत आह --- समानेति। सत्त्वेनोपनिबन्धनम् अविनाभावः संबन्धः, समानं सत्त्वोपनिबन्धनं ययो रजस्तमसोस् ते तथोक्ते। वशीकारोऽभिभवः। असंकरम् आह --- तस्माच् चेति। चकारोऽप्यर्थः। न केवलं रजस्तमोभ्याम् इत्य् अर्थः। परिणामिन इति वैधर्म्यम् अपरिणामिनः पुरुषाद् उक्तम्। प्रत्ययाविशेषः शान्तघोरमूढरूपाया बुद्धेश् चैतन्यबिम्बोद्ग्राहेण चैतन्यस्य शान्ताद्याकाराध्यारोपश् चन्द्रमस इव स्वच्छसलिलप्रतिबिम्बितस्य तत्कम्पात् कम्पनारोपः। भोगहेतुम् आह --- दर्शितविषयत्वाद् इति। असकृद् व्याख्यातम्। ननु बुद्धिसत्त्वम् अस्तु पुरुषभिन्नं भोगस् तु पुंसः कुतो भिद्यत इत्य् अत आह --- स भोगप्रत्ययो भोगरूपः प्रत्ययः सत्त्वस्यातः परार्थत्वाद् दृश्यो भोग्यः। सत्त्वं हि परार्थं संहतत्वात् तद्धर्मश् च भोग इति सो ऽपि परार्थः। यस्मै च परस्मा असौ तस्य भोक्तुर् भोग्यः। अथवानुकूलप्रतिकूलवेदनीयस् तु सुखदुःखानुभवो भोगः। न चायम् आत्मानम् एवानुकूलयति प्रतिकूलयति वा, स्वात्मनि वृत्तिविरोधाद् अतोऽनुकूलनीयप्रतिकूलनीयार्थो भोगः। स भोक्तात्मा तस्य दृश्यो भोग्य इति। यस् तु तस्मात् परार्थाद् विशिष्ट इति। परार्थाद् इति पञ्चम्यन्यपदाध्याहारेण व्याख्याता। स्याद् एतत् पुरुषविषया चेत् प्रज्ञा हन्त भोः पुरुषः प्रज्ञायाः प्रज्ञेय इति प्रज्ञान्तरम् एव तत्र तत्रेत्य् अनवस्थापात इत्य् अत आह --- न च पुरुषप्रत्ययेनेति। अयम् अभिसंधिः --- चित्या जडः प्रकाश्यते। न जडेन चितिः। पुरुषप्रत्ययस् त्व् अचिदात्मा कथं चिदात्मानं प्रकाशयेत्। चिदात्मा त्व् अपराधीनप्रकाशो जडं प्रकाशयतीति युक्तम्। बुद्धिसत्त्वात्मनेत्य् अचिद्रूपतादात्म्येन जडत्वम् आह। बुद्धिसत्त्वगतपुरुषप्रतिबिम्बालम्बनात् पुरुषालम्बनं न तु पुरुषप्रकाशनात् पुरुषालम्बनम्। बुद्धिसत्त्वम् एव तु तेन प्रत्ययेन संक्रान्तपुरुषप्रतिबिम्बं पुरुषच्छायापन्नं चैतन्यम् आलम्बत इति पुरुषार्थः। अत्रैव श्रुतिम् उदाहरति --- तथा ह्य् उक्तम् ईश्वरेण विज्ञातारम् इति। न केनचिद् इत्य् अर्थः॥3.35॥

ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते॥3.36॥

स च स्वार्थसंयमो न यावत् प्रधानं स्वकार्यं पुरुषज्ञानम् अभिनिर्वर्तयति तावत् तस्य पुरस्ताद् या विभूतीर् आधत्ते ताः सर्वा दर्शयति --- ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते। तद् अनेन योगजधर्मानुगृहीतानां मनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां यथासंख्यं प्रातिभज्ञानदिव्यशब्दाद्यपरोक्षहेतुभावा उक्ताः। श्रोत्रादीनां पञ्चानां दिव्यशब्दाद्युपलम्भकानां तान्त्रिक्यः संज्ञाः श्रावणाद्याः। सुगमं भाष्यम्॥ 3.36॥

ते समाधाव् उपसर्गा व्युत्थाने सिद्धयः॥3.37॥

कदाचिद् आत्मविषयसंयमे प्रवृत्तस् तत्प्रभावाद् अमूर् अर्थान्तरसिद्धीर् अधिगम्य कृतार्थमन्यः संयमाद् विरमेद् अत आह --- ते समाधाव् उपसर्गा व्युत्थाने सिद्धयः। व्युत्थितचित्तो हि ताः सिद्धीर् अभिमन्यते। जन्मदुर्गत इव द्रविणकणिकाम् अपि द्रविणसंभारम्। योगिना तु समाहितचित्तेनोपनताभ्योऽपि ताभ्यो विरन्तव्यम्। अभिसंहिततापत्रयात्यन्तिकोपशमरूपपरमपुरुषार्थः स खल्व् अयं कथं तत्प्रत्यनीकासु सिद्धिषु रज्येतेति सूत्रभाष्ययोर् अर्थः॥3.37॥

बन्धकारणशैथिल्यात् प्रचारसंवेदनाच् च चित्तस्य परशरीरावेशः॥3.38॥

तद् एवं ज्ञानरूपम् अइश्वर्यं पुरुषदर्शनान्तं संयमफलम् उक्त्वा क्रियारूपम् अइश्वर्यं संयमफलम् आह --- बन्धकारणशैथिल्यात् प्रचारसंवेदनाच् च चित्तस्य परशरीरावेशः। समाधिबलाद् इति। बन्धकारणविषयसंयमबलात् प्राधान्यात् समाधिग्रहणम्। प्रचरत्य् अनेनास्मिन्न् इति प्रचारः। चित्तस्य गमागमाध्वानो नाड्यस् तस्मिन् प्रचारे संयमात् तद्वेदनं, तस्माच् च बन्धकारणशैथिल्यान् न तेन प्रतिबध्यते। अप्रतिबद्धम् अप्य् उन्मार्गेण गच्छन् न स्वशरीराद् अप्रत्यूहं निष्क्रामति। न च परशरीरम् आविशति। तस्मात् तत्प्रचारोऽपि ज्ञातव्यः। इन्द्रियाणि च चित्तानुसारीणि परशरीरे यथाधिष्ठानं निविशन्त इति॥3.38॥

उदानजयाज् जलपङ्ककण्टकादिष्व् असङ्ग उत्क्रान्तिश् च॥3.39॥

उदानजयाज् जलपङ्ककण्टकादिष्व् असङ्ग उत्क्रान्तिश् च। समस्तेन्द्रियवृत्तिर् जीवनं प्राणादिलक्षणा प्राणादयो लक्षणं यस्याः सा तथोक्ता। द्वयीन्द्रियाणां वृत्तिर् बाह्याभ्यन्तरी च। बाह्या रूपाद्यालोचनलक्षणा। आभ्यन्तरी तु जीवनं, सा हि प्रयत्नभेदः शरीरोपगृहीतमारुतक्रियाभेदहेतुः सर्वकरणसाधारणः। यथाहुः ---

"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" [सांख्यकारिका 29] इति।

तैर् अस्य लक्षणीयत्वात् तस्य प्रयत्नस्य क्रिया कार्यं पञ्चतयी। प्राण आ नासिकाग्राद् आ च हृदयाद् अवस्थितः। अशितपीताहारपरिणतिभेदं रसं तत्र तत्र स्थाने समम् अनुरूपं नयन् समानः। आ हृदयाद् आ च नाभेर् अस्यावस्थानम्। मूत्रपुरीषगर्भादीनाम् अपनयनहेतुर् अपानः। आ नाभेर् आ च पादतलाद् अस्य वृत्तिः। उन्नयनाद् ऊर्ध्वं नयनाद् रसादीनाम् उदानः। आ नासिकाग्राद् आ च शिरसो वृत्तिर् अस्य। व्यापी व्यानः। एषाम् उक्तानां प्रधानं प्राणस् तदुत्क्रमे सर्वोत्क्रमश्रुतेः "प्राणम् उत्क्रामन्तम् अनु सर्वे प्राणा उत्क्रामन्ति" [बृहदारण्यकोपनिषत् 4.4.2] इति। तद् एवं प्राणादीनां क्रियास्थानभेदेन भेदं प्रतिपाद्य सूत्रार्थम् अवतारयति --- उदानजयाद् इति। उदाने कृतसंयमस् तज्जयाज् जलादिभिर् न प्रतिहन्यते। उत्क्रान्तिश् चार्चिरादिमार्गेण भवति प्रायणकाले। तस्मात् ताम् उत्क्रान्तिं वशित्वेन प्रतिपद्यते। प्राणादिसंयमात् तद्विजये भूतजय एताः क्रियाः स्थानविजयादिभेदात् प्रतिपत्तव्याः॥3.39॥

समानजयाज् ज्वलनम्॥3.40॥

समाजनयाज् ज्वलनम्। तेजसः शारीरस्योपध्मानम् उत्तेजनम्॥3.40॥

श्रोत्राकाशयोः संबन्धसंयमाद् दिव्यं श्रोत्रम्॥3.41॥

स्वार्थसंयमाद् अन्वाचयशिष्टं श्रावणाद्य् उक्तं संप्रति श्रावणाद्यर्थाद् एव संयमाच् छ्रावणादि भवतीत्य् आह --- श्रोत्राकाशयोः संबन्धसंयमाद् दिव्यं श्रोत्रम्। संयमविषयं श्रोत्राकाशयोः संबन्धम् आधाराधेयभावम् आह --- सर्वश्रोत्राणाम् आहंकारिकाणाम् अप्य् आकाशं कर्णशष्कुलीविवरं प्रतिष्ठा तदायतनं श्रोत्रं तदुपकारापकाराभ्यां श्रोत्रस्योपकारापकारदर्शनात्। शब्दानां च श्रोत्रसहकारिणां पार्थिवादिशब्दग्रहणे कर्तव्ये कर्णशष्कुलीसुषिरवर्ति श्रोत्रं स्वाश्रयनभोगतासाधारणशब्दम् अपेक्षते। गन्धादिगुणसहकारिभिर् घ्राणादिभिर् बाह्यं पृथिव्यादिवर्तिगन्धाद्यालोचने कार्ये दृष्टम्। आहंकारिकम् अपि घ्राणरसनत्वक्चक्षुःश्रोत्रं भूताधिष्ठानम् एव भूतोपकारापकाराभ्यां घ्राणादीनाम् उपकारापकारदर्शनाद् इत्य् उक्तम्। तच् चेदं श्रोत्रम् आहंकारिकम् अयःप्रतिमम् अयस्कान्तमणिकल्पेन वक्तृवक्त्रसमुत्पन्नेन वक्त्रस्थेन शब्देनाकृष्टं स्ववृत्तिपरम्परया वक्तृवक्त्रम् आगतं शब्दम् आलोचयति। तथा च दिग्देशवर्तिशब्दप्रतीतिः प्राणभृन्मात्रस्य नासति बाधकेऽप्रमाणीकृता भविष्यतीति। तथा च पञ्चशिखस्य वाक्यम् --- तुल्यदेशश्रवणानाम् एकदेशश्रुतित्वं सर्वेषां भवतीति। तुल्यदेशानि श्रवणानि श्रोत्राणि येषां चैत्रादीनां ते तथोक्ताः। सर्वेषां श्रवणान्य् आकाशवर्तीनीत्य् अर्थः। तच् च श्रोत्राधिष्ठानम् आकाशं शब्दगुणतन्मात्राद् उत्पन्नं शब्दगुणकं येन शब्देन सहकारिणा पार्थिवादीञ् शब्दान् गृह्णाति। तस्मात् सर्वेषाम् एकजातीया श्रुतिः शब्द इत्य् अर्थः। तद् अनेन श्रोत्राधिष्ठानत्वम् आकाशस्य शब्दगुणत्वं च दर्शितम् इति। तच् चैकदेशश्रुतित्वम् आकाशस्य लिङ्गम्। सा ह्य् एकजातीया शब्दव्यञ्जिका श्रुतिर् यदाश्रया तद् एवाकाशशब्दवाच्यम्। न हीदृशीं श्रुतिम् अन्तरेण शब्दव्यक्तिः। न चेदृशी श्रुतिः पृथिव्यादिगुणस् तस्य स्वात्मनि व्यङ्ग्यव्यञ्जकत्वानुपपत्तेर् इति। अनावरणं चाकाशलिङ्गम्। यद्य् आकाशं नाभविष्यद् अन्योन्यसंपिण्डितानि मूर्तानि न सूचीभिर् अप्य् अभेत्स्यन्त। ततश् च सर्वैर् एव सर्वम् आवृतं स्यात्। न च मूर्तद्रव्याभावमात्राद् एवानावरणम् अस्याभावस्य भावाश्रितत्वेन तदभावेऽभावात्। न च चितिशक्तिस् तदाश्रया भवितुम् अर्हति। अपरिणामितयावच्छेदकत्वाभावात्। न च दिक्कालादयः पृथिव्यादिद्रव्यव्यतिरिक्ताः सन्ति। तस्मात् तादृशः परिणतिभेदो नभस एवेति सर्वम् अवदातम्। अनावरणे चाकाशलिङ्गे सिद्धे यत्र यत्रानावरणं तत्र तत्र सर्वत्राकाशम् इति सर्वगतत्वम् अप्य् आकाशस्य सिद्धम् इत्य् आह --- तथामूर्तस्येति। श्रोत्रसद्भावे प्रमाणम् आह --- शब्दग्रहणेति। क्रिया हि करणसाध्या दृष्टा। यथा छिदादिर् वास्यादिसाध्या। तद् इह शब्दग्रहणक्रिययापि करणसाध्यया भवितव्यं, यच् च करणं तच् च श्रोत्रम् इति। अथास्याश् चक्षुरादय एव कस्मात् करणं न भवन्तीत्य् अत आह --- बधिराबधिरयोर् इति। अन्वयव्यतिरेकाभ्याम् अवधारणम्। उपलक्षणं चैतत् त्वग्वातयोश् चक्षुस्तेजसो रसनोदकयोर् नासिकापृथिव्योः संबन्धसंयमाद् दिव्यत्वगाद्य् अप्य् ऊहनीयम्॥3.41॥

कायाकाशयोः संबन्धसंयमाल् लघुतूलसमापत्तेश् चाकाशगमनम्॥3.42॥

कायाकशयोः संबन्धसंयमाल् लघुतूलसमापत्तेश् चाकाशगमनम्। कायाकाशसंबन्धसंयमाद् वा लघुनि वा तूलादौ कृतसंयमात् समापत्तिं चेतसस् तत्स्थतदञ्जनतां लब्ध्वेति। सिद्धिक्रमम् आह --- जल इति॥3.42॥

बहिर् अकल्पिता वृत्तिर् महाविदेहा ततः प्रकाशावरणक्षयः॥3.43॥

अपरम् अपि परशरीरावेशहेतुं संयमं क्लेशकर्मविपाकक्षयहेतुं चाह --- बहिर् अकल्पिता वृत्तिर् महाविदेहा ततः प्रकाशावरणक्षयः। विदेहाम् आह -

-- शरीराद् इति। अकल्पिताया महाविदेहाया य उपायस् तत्प्रदर्शनाय कल्पितां विदेहाम् आह --- सा यदीति। वृत्तिमात्रं कल्पनाज्ञानमात्रं तेन। महाविदेहाम् आह --- या त्व् इति। उपायोपेयते कल्पिताकल्पितयोर् आह --- तत्रेति। किं परशरीरावेशमात्रम् इतो नेत्य् आह --- ततश् चेति। ततो धारणातो महाविदेहाया मनःप्रवृत्तेः सिद्धिः। क्लेशश् च कर्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगाः। तद् एतद् रजस्तमोमूलं विगलितरजस्तमसः सत्त्वमात्राद् विवेकख्यातिमात्रसमुत्पादात्। तद् एतद् विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद्बुद्धिसत्त्वम् आवृणोति। तत्क्षयाच् च निरावरणं योगिचित्तं यथेच्छं विहरति विजानाति चेति॥3.43॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः॥3.44॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः। स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश् चार्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि तेषु संयमात् तज्जयः। स्थूलम् आह --- तत्रेति। पार्थिवाः पाथसीयास् तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासंभवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सुरभ्यादयः। एते हि नामरूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः। एतेषां पञ्च पृथिव्यां गन्धवर्जं चत्वारोऽप्सु गन्धरसवर्जं त्रयस् तेजसि गन्धरसरूपवर्जं द्वौ नभस्वति शब्द एवाकाशे। त एव ईदृशा विशेषाः सहाकारादिभिर् धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे। तत्रापि पार्थिवास् तावद् धर्माः ---

"आकारो गौरवं रौक्ष्यं वरणं स्थैर्यम् एव च। वृत्तिर् भेदः क्षमा कार्ष्ण्यं काठिन्यं सर्वभोग्यता"॥

अपां धर्माः ---

"स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत्। शैत्यं रक्षा पवित्रत्वं संधानं चौदका गुणाः"॥

तैजसा धर्माः ---

"ऊर्ध्वभाक् पाचकं दग्धृ पावकं लघु भास्वरम्। प्रध्वंस्य् ओजस्वि वै तेजः पूर्वाभ्यां भिन्नलक्षणम्"॥

वायवीया धर्माः ---

"तिर्यग्यानं पवित्रत्वम् आक्षेपो नोदनं बलम्। चलमच्छायता रौक्ष्यं वायोर् धर्माः पृथग्विधाः"॥

आकाशीया धर्माः ---

"सर्वतोगतिर् अव्यूहोऽविष्टम्भश् चेति ते त्रयः। आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणाः" इति॥

त एत आकारप्रभृतयो धर्मास् तैः सहेति। आकारश् च सामान्यविशेषो गोत्वादिः। द्वितीयं रूपम् आह --- द्वितीयं रूपं स्वसामान्यम्। मूर्तिः सांसिद्धिकं काठिन्यम्। स्नेहो जलं मृजापुष्टिबलाधानहेतुः। वह्निर् उष्णतोदर्ये सौर्ये भौमे च सर्वत्रैव तेजसि समवेतोष्णतेति। सर्वं चैतद् धर्मधर्मिणोर् अभेदविवक्षयाभिधानम्। वायुः प्रणामी वहनशीलः। तद् आह ---

"चलनेन तृणादीनां शरीरस्याटनेन च। सर्वगं वायुसामान्यं नामित्वम् अनुमीयते"॥

सर्वतोगतिर् आकाशः सर्वत्र शब्दोपलब्धिदर्शनात्। श्रोत्राश्रयाकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धिर् इत्य् उपपादितम् अधस्तात्। एतत् स्वरूपशब्देनोक्तम्। अस्यैव मूर्त्यादिसामान्यस्य शब्दादयः षड्जादय उष्णत्वादयः शुक्लत्वादयः कषायत्वादयः सुरभित्वादयो मूर्त्यादीनां सामान्यानां भेदाः। सामान्यान्य् अपि मूर्त्यादीनि जम्बीरपनसामलकफलादीनि रसादिभेदात् परस्परं व्यावर्तन्ते। तेनैतेषाम् एते रसादयो विशेषाः। तथा चोक्तम् --- एकजातिसमन्वितानां प्रत्येकं पृथिव्यादीनाम् एकैकया जात्या मूर्तिस्नेहादिना समन्वितानाम् एषां षड्जादिधर्ममात्रव्यावृत्तिर् इति। तद् एवं सामान्यं मूर्त्याद्य् उक्तं विशेषाश् च शब्दादय उक्ताः। ये चाहुः सामान्यविशेषाश्रयो द्रव्यम् इति तान् प्रत्याह --- सामान्यविशेषसमुदायोऽत्र दर्शने द्रव्यम्। येऽपि तदाश्रयो द्रव्यम् आस्थिषत तैर् अपि तत्समुदायोऽनुभूयमानो नापह्नोतव्यः। न च तदपह्नवे तयोर् आधारो द्रव्यम् इति भवति। तस्मात् तद् एवास्तु द्रव्यम्। न तु ताभ्यां तत्समुदायाच् च तदाधारम् अपरं द्रव्यम् उपलभामहे। ग्रावभ्यो ग्रावसमुदायाद् इव च तदाधारम् अपरं पृथग्विधं शिखरम्। समूहो द्रव्यम् इत्य् उक्तं तत्र समूहमात्रं द्रव्यम् इति भ्रमापनुत्तये समूहविशेषो द्रव्यम् इति निर्धारयितुं समूहप्रकारान् आह --- द्विष्ठो हीति। यस्माद् एवं तस्मान् न समूहमात्रं द्रव्यम् इत्य् अर्थः। द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः। एकं प्रकारम् आह --- प्रत्यस्तमितेति। प्रत्यस्तमितो भेदो येषाम् अवयवानां ते तथोक्ताः। प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः। एतद् उक्तं भवति --- शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीतावयवभेदस् तद्वाचकशब्दाप्रयोगात् समूह एकोऽवगम्यत इति।

युतायुतसिद्धावयवत्वेन चेतनाचेतनत्वेन चोदाहरणचतुष्टयम्। युतायुतसिद्धावयवत्वं चाग्रे वक्ष्यते। द्वितीयं प्रकारम् आह --- शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्या इति। देवमनुष्या इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिन्नाव् उपात्तौ। ननूभयशब्दात् तावद् अवयवभेदो न प्रतीयते तत् कथम् उपात्तभेदावयवानुगत इत्य् अत आह --- ताभ्यां भागाभ्याम् एव समूहोऽभिधीयते। उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहो वाच्यः, वाक्यस्य वाक्यार्थवाचकत्वाद् इति भावः। पुनर् द्वैविध्यम् आह --- स चेति। भेदेन चाभेदेन च विवक्षितः। भेदविवक्षितम् आह --- आम्राणां वनं ब्राह्मणानां संघ इति। भेद एव षष्ठीश्रुतेः, यथा गर्गाणां गौर् इति। अभेदविवक्षितम् आह --- आम्रवणं ब्राह्मणसंघ इति। आम्राश् च ते वनं चेति समूहसमूहिनोर् अभेदं विवक्षित्वा सामानाधिकरण्यम् इत्य् अर्थः। विधान्तरम् आह --- स पुनर् द्विविधः। युतसिद्धावयवः समूहः। युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः, यूथं वनम् इति। सान्तराला हि तदवयवा वृक्षाश् च गावश् च। अयुतसिद्धावयवश् च समूहो वृक्षो गौः परमाणुर् इति। निरन्तरा हि तदवयवाः सामान्यविशेषा वा सास्नादयो वेति। तद् एतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति --- अयुतसिद्धेति। तद् एवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतम् उपसंहरति --- एतत् स्वरूपम् इत्य् उक्तम् इति। तृतीयं रूपं विवक्षुः पृच्छति --- अथेति। उत्तरम् आह --- तन्मात्रम् इति। तस्यैकोऽवयवः परिमाणभेदः परमाणुः, सामान्यं मूर्तिः, शब्दादयो विशेषास् तदात्मा, अयुतसिद्धा निरन्तरा येऽवयवाः सामान्यविशेषास् तद्भेदेष्व् अनुगतः समुदायः। यथा च परमाणुः सूक्ष्मं रूपम् एवं सर्वतन्मात्राणि सूक्ष्मं रूपम् इति। उपसंहरति --- एतद् इति। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्यस्वभावम् अनुपतितुम् अनुगन्तुं शीलं येषां ते तथोक्ताः। अत एवान्वयशब्देनोक्ताः। अथैषां पञ्चमं रूपम् अर्थवत्त्वं विवृणोति --- भोगेति। नन्व् एवम् अपि सन्तु गुणा अर्थवन्तस् तत्कार्याणां तु कुतोऽर्थवत्त्वम् इत्य् अत आह --- गुणा इति। भौतिका गोघटादयः। तद् एवं संयमविषयम् उक्त्वा संयमं तत्फलं चाह --- तेष्व् इति। भूतप्रकृतयो भूतस्वभावाः॥3.44॥

ततोऽणिमादिप्रादुर्भावः कायसंपत् तद्धर्मानभिघातश् च॥3.45॥

संकल्पानुविधाने भ्ऊतानां किं योगिनः सिध्यतीत्य् अत आह --- ततोऽणिमादिप्रादुर्भावः कायसंपत् तद्धर्मानभिघातश् च। स्थूलसंयमजयाच् चतस्रः सिद्धयो भवन्तीत्य् आह --- तत्राणिमा महान् अपि भवत्य् अणुः। लघिमा महान् अपि लघुर् भूत्वेषीकातूल इवाकाशे विहरति। महिमाल्पोऽपि नागनगगगनपरिमाणो भवति। प्राप्तिः सर्वे भावाः संनिहिता भवन्ति योगिनः। तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। स्वरूपसंयमविजयात् सिद्धिम् आह --- प्राकाम्यम् इच्छानभिघातो नास्य रूपं भूतस्वरूपैर् मूर्त्यादिभिर् हन्यते। भूमाव् उन्मज्जति निमज्जति च यथोदके। सूक्ष्मविषयसंयमजयात् सिद्धिम् आह --- वशित्वं भूतानि पृथिव्यादीनि भौतिकानि गोघटादीनि तेषु वशी स्वतन्त्रो भवति, तेषां त्व् अवश्यस् तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात् तत्कार्यवशीकारस् तेन यानि यथावस्थापयति तानि तथावतिष्ठन्त इत्य् अर्थः। अन्वयविषयसंयमजयात् सिद्धिम् आह --- ईशितृत्वं तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन् यः प्रभव उत्पादो यश् चाप्ययो विनाशो यश् च व्यूहो यथावदवस्थापनं तेषां ईष्टे। अर्थवत्त्वसंयमात् सिद्धिम् आह --- यत्र कामावसायित्वं सत्यसंकल्पता। विजितगुणार्थवत्त्वो हि योगी यद्यदर्थतया संकल्पयति तत् तस्मै प्रयोजनाय कल्पते। विषम् अप्य् अमृतकार्ये संकल्प्य भोजयञ् जीवयतीति। स्याद् एतद् यथा शक्तिविपर्यासं करोत्य् एवं पदार्थविपर्यासम् अपि कस्मान् न करोति। तथा च चन्द्रमसम् आदित्यं कुर्यात् कुहूं च सिनीवालीम् इत्य् अत आह --- न च शक्तोऽपीति। न खल्व् एते यत्र कामावसायिनस् तत्रभवतः परमेश्वरस्याज्ञाम् अतिक्रमितुम् उत्सहन्ते। शक्तयस् तु पदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावा इति युज्यते तासु तदिच्छानुविधानम् इति। एतान्य् अष्टाव् अइश्वर्याणि। तद्धर्मानभिघात इति। अणिमादिप्रादुर्भाव इत्य् अनेनैव तद्धर्मानभिघातसिद्धौ पुनर् उपादानं कायसिद्धिवद् एतत् सूत्रोपबद्धसकलविषयसंयमफलवत्त्वज्ञापनाय। सुगमम् अन्यत्॥3.45॥

रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्॥3.46॥

कायसंपदम् आह --- रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्। वज्रस्येव संहननम् अवयवव्यूहो दृढो निबिडो यस्य स तथोक्तः॥3.46॥

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमाद् इन्द्रियजयः॥3.47॥

जितभूतस्य योगिन इन्द्रियजयोपायम् आह --- ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमाद् इन्द्रियजयः। ग्रहणं च स्वरूपं चास्मिता चान्वयश् चार्थवत्त्वं च तेषु संयमस् तस्माद् इत्य् अर्थः। गृहीतिर् ग्रहणं, तच् च ग्राह्याधीननिरूपणम् इति ग्राह्यं दर्शयति --- सामान्यविशेषात्मेति। ग्राह्यम् उक्त्वा ग्रहणम् आह --- तेष्व् इति। वृत्तिर् आलोचनं विषयाकारा परिणतिर् इति यावत्। ये त्व् आहुः --- सामान्यमात्रगोचरेन्द्रियवृत्तिर् इति तान् प्रत्याह --- न चेति। गृह्यत इति ग्रहणम्। न सामान्यमात्रगोचरं ग्रहणम्। बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्तते। अन्यथान्धबधिराद्यभावप्रसङ्गात्। तद् इह यदि न विशेषविषयम् इन्द्रियं तेनासाव् अनालोचितो विशेष इति कथं मनसानुव्यवसीयेत। तस्मात् सामान्यविशेषविषयम् इन्द्रियालोचनम् इति। तद् एतद् ग्रहणम् इन्द्रियाणां प्रथमं रूपम्। द्वितीयं रूपम् आह --- स्वरूपं पुनर् इति। अहंकारो हि सत्त्वभागेनात्मीयेनेन्द्रियाण्य् अजीजनत्। अतो यत् तत्र करणत्वं सामान्यं यच् च नियतरूपादिविषयत्वं विशेषस् तदुभयम् अपि प्रकाशात्मकम् इत्य् अर्थः। तेषां तृतीयं रूपम् इति। अहंकारो हीन्द्रियाणां कारणम् इति यत्रेन्द्रियाणि तत्र तेन भवितव्यम् इति सर्वेन्द्रियसाधारण्यात् सामान्यम् इन्द्रियाणाम् इत्य् अर्थः। चतुर्थं रूपम् इति। गुणानां हि द्वैरूप्यं व्यवसेयात्मकत्वं व्यवसायात्मकत्वं च। तत्र व्यवसेयात्मकतां ग्राह्यताम् आस्थाय पञ्च तन्मात्राणि भूतभौतिकानि निर्मिमीते। व्यवसायात्मकत्वं तु ग्रहणरूपम् आस्थाय साहंकाराणीन्द्रियाणीत्य् अर्थः। शेषं सुगमम्॥3.47॥

ततो मनोजवित्वं विकरणभावः प्रधानजयश् च॥3.48॥

पञ्चरूपेन्द्रियजयात् सिद्धीर् आह --- ततो मनोजवित्वं विकरणभावः प्रधानजयश् च। विदेहानाम् इन्द्रियाणां करणभावो विकरणभावः। देशः काश्मीरादिः। कालो ऽतीतादिः। विषयः सूक्ष्मादिः। सान्वयेन्द्रियजयात् सर्वप्रकृतिविकारवशित्वं प्रधानजयः। ता एताः सिद्धयो मधुप्रतीका इत्य् उच्यन्ते योगशास्त्रनिष्णातैः। स्याद् एतद् इन्द्रियजयाद् इन्द्रियाणि सविषयाणि वश्यानि भवन्तु, प्रधानादीनां तत्कारणानां किम् आयातम् इत्य् अत आह --- एताश् चेति। करणानाम् इन्द्रियाणां पञ्च रूपाणि ग्रहणादीनि तेषां जयात्। एतद् उक्तं भवति --- नेन्द्रियमात्रजयस्यैताः सिद्धयोऽपि तु पञ्चरूपस्य तदन्तर्गतं च प्रधानादीति॥3.48॥

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च॥3.49॥

त एते ज्ञानक्रियारूपैश्वर्यहेतवः संयमाः साक्षात् पारम्पर्येण च स्वसिद्ध्युपसंहारसंपादितश्रद्धाद्वारेण यदर्थास् तस्याः सत्त्वपुरुषान्यताख्यातेर् अवान्तरविभूतीर् दर्शयति --- सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च। निर्धूतरजस्तमोमलतया वैशारद्यं ततः परा वशीकारसंज्ञा रजस्तमोभ्याम् उपप्लुतं हि चित्तसत्त्वम् अवश्यम् आसीत् तदुपशमे तु तद्वश्यं योगिनो वशिनस् तस्मिन् वश्ये योगिनः सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम्। एतद् एव विवृणोति --- सर्वात्मान इति। व्यवसायव्यवसेयात्मानो जडप्रकाशरूपा इत्य् अर्थः। तद् अनेन क्रियैश्वर्यम् उक्तम्। ज्ञानैश्वर्यम् आह --- सर्वज्ञातृत्वम् इति। अस्या अपि द्विविधायाः सिद्धेर् वैराग्याय योगिजनप्रसिद्धां संज्ञाम् आह --- एषा विशोकेति। क्लेशाश् च बन्धनानि च कर्माणि तानि क्षीणानि यस्य स तथा॥3.49॥

तद्वैराग्याद् अपि दोषबीजक्षये कैवल्यम्॥3.50॥

संयमान्तराणां पुरुषार्थाभासफलत्वाद् विवेकख्यातिसंयमार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलम् आह --- तद्वैराग्याद् अपि दोषबीजक्षये क्अइवल्यम्। यदास्य योगिनः क्लेशकर्मक्षय एवं ज्ञानं भवति। किंभूतम् इत्य् आह --- सत्त्वस्यायं विवेकप्रत्ययो धर्मः। शेषं तत्र तत्र व्याख्यातत्वात् सुगमम्॥3.50॥

स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनर् अनिष्टप्रसङ्गात्॥3.51॥

संप्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसंभवे तन्निराकरणकारणम् उपदिशति --- स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनर् अनिष्टप्रसङ्गात्। स्थानानि येषां सन्ति ते स्थानिनो महेन्द्रादयस् तैर् उपनिमन्त्रणं तस्मिन् सङ्गश् च स्मयश् च न कर्तव्यः पुनर् अनिष्टप्रसङ्गात्। तत्र यं देवाः स्थानैर् उपमन्त्रयन्ते तं योगिनम् एकं निर्धारयितुं यावन्तो योगिनः संभवन्ति तावत एवाह --- चत्वार इति। तत्र प्राथमकल्पिकस्य स्वरूपम् आह --- तत्राभ्यासीति। प्रवृत्तमात्रं न पुनर् वशीकृतं ज्योतिर् ज्ञानं परचित्तादिविषयं यस्य स तथा। द्वितीयम् आह --- ऋतंभरप्रज्ञ इति। यत्रेदम् उक्तम् --- "ऋतंभरा तत्र प्रज्ञा" [योगसूत्रम् 1.48] इति। स हि भूतेन्द्रियाणि जिगीषुः। तृतीयम् आह --- भूतेन्द्रियजयीति। तेन हि स्थूलादिसंयमेन ग्रहणादिसंयमेन च भूतेन्द्रियाणि जितानि। तम् एवाह --- सर्वेषु भावितेषु निष्पादितेषु भूतेन्द्रियजयात् परचित्तादिज्ञानादिषु कृतरक्षाबन्धो यतस् तेभ्यो न च्यवते भावनीयेषु निष्पादनीयेषु विशोकादिषु परवैराग्यपर्यन्तेषु कर्तव्यसाधनवान् पुरुषप्रयत्नस्य साधनविषयस्यैव साध्यनिष्पादकत्वात्। चतुर्थम् आह --- चतुर्थ इति। तस्य हि भगवतो जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्ग एको ऽर्थः। तद् एतेषु योगिषूपनिमन्त्रणविषयं योगिनम् अवधारयति --- तत्र मधुमतीम् इति। प्राथमकल्पिके तावन् महेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति। तृतीयोऽपि तैर् नोपनिमन्त्रणीयो भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः। चतुर्थोऽपि परवैराग्यसंपत्तेर् आसङ्गशङ्का दूरोत्सारितैवेति पारिशेष्याद् द्वितीय एव ऋतंभरप्रज्ञस् तदुपनिमन्त्रणविषय इति। वैहायसम् आकाशगामि, अक्षयम् अविनाशि, अजरं सदाभिनवम्। स्मयकरणे दोषम् आह --- स्मयाद् अयम् इति। स्मयात् सुस्थितंमन्यो नानित्यतां भावयिष्यति, न तस्यां प्रणिधास्यतीत्य् अर्थः। सुगमम् अन्यत्॥3.51॥

क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम्॥3.52॥

उक्ता क्वचित् क्वचित् संयमात् सर्वज्ञता, सा च न निःशेषज्ञता। अपि तु प्रकारमात्रविवक्षया, यथा सर्वैर् व्यञ्जनैर् भुक्तम् इति। अत्र हि यावन्तो व्यञ्जनप्रकारास् तैर् भुक्तम् इति गम्यते न तु निःशेषैर् इति। अस्ति च निःशेषवचनः सर्वशब्दो यथोपनीतम् अन्नं सर्वम् अशितं प्राशकेनेति। तत्र हि निःशेषम् इति गम्यते। तद् इह निःशेषज्ञतालक्षणस्य विवेकजज्ञानस्य साधनं संयमम् आह --- क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम्। क्षणपदार्थं निदर्शनपूर्वकम् आह --- यथेति। लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्न् अवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सो ऽपकर्षपर्यन्तः परमाणुर् यथा तथापकर्षपर्यन्तः कालः क्षणः, पूर्वापरभागविकलकालकलेति यावत्। तम् एव क्षणं प्रकारान्तरेण दर्शयति --- यावता वेति। परमाणुमात्रं देशम् अतिक्रामेद् इत्य् अर्थः। क्रमपदार्थम् आह --- तत्प्रवाहेति। तत्पदेन क्षणः परामृश्यते। न चेदृशः क्रमो वास्तवः किं तु काल्पनिकस् तस्य समाहाररूपस्यायुगपदुपस्थितेषु वास्तवत्वेन विचारासहत्वाद् इत्य् आह --- क्षणतत्क्रमयोर् इति। अयुगपद्भाविक्षणधर्मत्वात्

क्रमस्य क्षणसमाहारस्यावास्तवत्वात् क्षणतत्क्रमयोर् अप्य् अवास्तवत्वं समाहारस्य नैसर्गिकवैतण्डिकबुद्ध्यतिशयरहिता लौकिकाः प्रतिक्षण एव व्युत्थितदर्शना भ्रान्ता ये कालम् ईदृशं वास्तवम् अभिमन्यन्त इति। तत् किं क्षणोऽप्य् अवास्तवो नेत्य् आह --- क्षणस् तु वस्तुपतितो वास्तव इत्य् अर्थः। क्रमस्यावलम्बनम् अवलम्बः सोऽस्यास्तीति क्रमेणावलम्ब्यते वैकल्पिकेनेत्य् अर्थः। क्रमस्य क्षणावलम्बनत्वे हेतुम् आह --- क्रमश् चेति। क्रमस्यावास्तवत्वे हेतुम् आह --- न चेति। चो हेत्वर्थे। यस् तु वैजात्यात् सहभावम् उपेयात् तं प्रत्याह --- क्रमश् च न द्वयोर् इति। कस्माद् असंभव इत्य् अत आह --- पूर्वस्माद् इति। उपसंहरति --- तस्माद् इति। तत् किम् इदानीं शशविषाणायमाना एव पूर्वोत्तरक्षणा नेत्य् आह --- ये त्व् इति। अन्विताः साम्येन समन्वागता इत्य् अर्थः। उपसंहरति --- तेनेति। वर्तमानस्यैवार्थक्रियासु स्वोचितासु सामर्थ्याद् इति॥ 3.52॥

जातिलक्षणदेशैर् अन्यतानवच्छेदात् तुल्ययोस् ततः प्रतिपत्तिः॥3.53॥

यद्य् अप्य् एतद् विवेकजं ज्ञानं निःशेषभावविषयम् इत्य् अग्रे वक्ष्यते तथाप्य् अतिसूक्ष्मत्वात् प्रथमं तस्य विषयविशेष उपक्षिप्यते --- जातिलक्षणदेशैर् अन्यतानवच्छेदात् तुल्ययोस् ततः प्रतिपत्तिः। लौकिकानां जातिभेदोऽन्यताया ज्ञापकहेतुः। तुल्या जातिर् गोत्वं तुल्यश् च देशः पूर्वादिः। कालाक्षीस्वस्तिमत्योर् लक्षणभेदः परम् इति। द्वयोर् आमलकयोस् तुल्यामलकत्वजातिर् वर्तुलादि लक्षणं तुल्यं देशभेदः परम् इति। यदा तु योगिज्ञानं जिज्ञासुना केनचित् पूर्वामलकम् अन्यव्यग्रस्य योगिनो ज्ञातुर् उत्तरदेश उपावर्त्यत उत्तरदेशम् आमलकं ततोऽपसार्य पिधाय वा तदा तुल्यदेशत्वे पूर्वम् एतद् उत्तरम् एतद् इति प्रविभागानुपपत्तिः प्राज्ञस्य लौकिकस्य त्रिप्रमाणीनिपुणस्यासंदिग्धेन च तत्त्वज्ञानेन भवितव्यं विवेकजज्ञानवतो योगिनः संदिग्धत्वानुपपत्तेः। अत उक्तं सूत्रकृता --- ततः प्रतिपत्तिः। तत इति व्याचष्टे --- विवेकजज्ञानाद् इति। क्षणतत्क्रमसंयमाज् जातं ज्ञानं कथम् आमलकं तुल्यजातिलक्षणदेशाद् आमलकान्तराद् विवेचयतीति पृच्छति --- कथम् इति। उत्तरम् आह --- पूर्वामलकसहक्षणो देशः पूर्वामलकेनैकक्षणो देशस् तेन सह निरन्तरपरिणाम इति यावत्। उत्तरामलकसहक्षणाद् देशाद् उत्तरामलकनिरन्तरपरिणामाद् भिन्नो भवतु देशयोर् भेदः किम् आयातम् आमलकभेदस्येत्य् अत आह --- ते चामलके स्वदेशक्षणानुभवभिन्ने, स्वदेशसहितो यः क्षणस् तस्यामलकस्य कालकला स्वदेशेन सहौत्तराधर्यरूपपरिणामलक्षिता सा स्वदेशक्षणस् तस्यानुभवः प्राप्तिर् वा ज्ञानं वा तेन भिन्ने आमलके ययोर् आमलकयोः पूर्वोत्तराभ्यां देशाभ्याम् अउत्तराधर्यपरिणामक्षण आसीत् तयोर् देशान्तरौत्तराधर्यपरिणामक्षणविशिष्टत्वम् अनुभवन् संयमी ते भिन्ने एव प्रत्येति। संप्रति तद्देशपरिणामेऽपि पूर्वभिन्नदेशपरिणामाद् विशिष्टस्य चैतद्देशपरिणामक्षणस्य संयमतः साक्षात्करणात्। तद् इदम् उक्तम् --- अन्यदेशक्षणानुभवस् तु तयोर् अन्यत्वे हेतुर् इति। अनेनैव निदर्शनेन लौकिकपरीक्षकसंवादादिना परमाणोर् अपीदृशस्य भेदो योगीश्वरबुद्धिगम्यः श्रद्धेय इत्य् आह --- एतेनेति। अपरे तु वर्णयन्ति। वर्णनम् उदाहरति --- य इति। वैशेषिका हि नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इत्य् आहुः। तथा हि --- योगिनो मुक्तांस् तुल्यजातिदेशकालान् व्यवधिरहितान् परस्परतो भेदेन प्रत्येकं तत्त्वेन च प्रतिपद्यन्ते। तस्माद् अस्ति कश्चिद् अन्त्यो विशेष इति। तथा च स एव नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति। तद् एतद् दूषयति --- तत्रापीति। जातिदेशलक्षणान्य् उदाहृतानि। मूर्तिः संस्थानं यथैकं विशुद्धावयवसंस्थानोपपन्नम् अपसार्य तस्मिन्न् एव देशेऽन्यव्यग्रस्य द्रष्टुः कुत्सितावयवसंनिवेश उपावर्त्यते तदा तस्य संस्थानभेदेन भेदप्रत्ययः, शरीरं वा मूर्तिस् तत्संबन्धेनात्मनां संसारिणां मुक्तात्मनां वा भूतचरेण यादृशतादृशेन भेद इति सर्वत्र भेदप्रत्ययस्यान्यथासिद्धेर् नान्त्यविशेषकल्पना। व्यवधिर् भेदकारणम्। यथा कुशपुष्करद्वीपयोर् देशस्वरूपयोर् इति। यतो जातिदेशादिभेदा लोकबुद्धिगम्या अत उक्तं --- क्षणभेदस् तु योगिबुद्धिगम्य एवेति। एवकारः क्षणभेदम् अवधारयति न योगिबुद्धिगम्यत्वं, तेन भूतचरेण देहसंबन्धेन मुक्तात्मनाम् अपि भेदो योगिबुद्धिगम्य उन्नेय इति। यस्य तूक्ता भेदहेतवो न सन्ति तस्य प्रधानस्य भेदो नास्तीत्य् आचआर्यो मेने। यस्माद् ऊचे "कृतार्थं प्रति नष्टम् अप्य् अनष्टं तदन्यसाधारणत्वात्" [योगसूत्रम् 2.22] इति। तद् आह --- मूर्तिव्यवधीति। उक्तभेदहेतूपलक्षणम् एतत्। जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो नास्तीत्य् अर्थः॥3.53॥

तारकं सर्वविषयं सर्वथाविषयम् अक्रमं चेति विवेकजं ज्ञानम्॥3.54॥

तद् एवं विषयैकदेशं विवेकजज्ञानस्य दर्शयित्वा विवेकजं ज्ञानं लक्षयति --- तारकं सर्वविषयं सर्वथाविषयम् अक्रमं चेति विवेकजं ज्ञानम्। विवेकजं ज्ञानम् इति लक्ष्यनिर्देशः। शेषं लक्षणम्। संसारसागरात् तारयतीति तारकम्। पूर्वस्मात् प्रातिभाद् विशेषयति --- सर्वथाविषयम् इति। पर्याया अवान्तरविशेषाः। अत एव विवेकजं ज्ञानं परिपूर्णं नास्य क्वचित् किंचित् कथंचित् कदाचिद् अगोचर इत्य् अर्थः। आस्तां तावज् ज्ञानान्तरं संप्रज्ञातोऽपि तावद् अस्यांशः। तस्माद् अतः परं किं परिपूर्णम् इत्य् आह --- अस्यैवांशो योगप्रदीपः संप्रज्ञातः। किम् उपक्रमः किम् अवसानश् चासाव् इत्य् आह --- मधुमतीम् इति। ऋतंभरा प्रज्ञैव मधु मोदकारणत्वात्। यथोक्तं प्रज्ञाप्रासादम् आरुह्येति। तद्वती मधुमती धियोऽवस्था ताम् उपादाय यावद् अस्य परिसमाप्तिः सप्तधा प्रान्तभूमिः प्रज्ञा। अत एव विवेकजं ज्ञानं तारकं भवति। तदंशस्य योगप्रदीपस्य तारकत्वाद् इति॥3.54॥

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् इति॥3.55॥

(इति श्रीपतञ्जलिविरचितयोगसूत्रेषु तृतीयो विभूतिपादः॥3॥)

तद् एवं परम्परया कैवल्यस्य हेतून् सविभूतीन् संयमान् उक्त्वा सत्त्वपुरुषान्यताज्ञानं साक्षात् कैवल्यसाधनम् इत्य् अत्र सूत्रम् अवतारयति ---

प्राप्तेति। विवेकजं ज्ञानं भवतु मा वा भूत् सत्त्वपुरुषान्यताख्यातिस् तु कैवल्यप्रयोजिकेत्य् अर्थः। सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् इति। इतिः सूत्रसमाप्तौ। ईश्वरस्य पूर्वोक्तैः संयमैर् ज्ञानक्रियाशक्तिमतोऽनीश्वरस्य वा समनन्तरोक्तेन संयमेन विवेकजज्ञानभागिन इतरस्य वानुत्पन्नज्ञानस्य न विभूतिषु काचिद् अपेक्षास्तीत्य् आह --- न हीति। ननु यद्य् अनपेक्षिता विभूतयः कैवल्ये व्यर्थस् तर्हि तासाम् उपदेश इत्य् अत आह --- सत्त्वशुद्धिद्वारेणेति। इत्थंभूतलक्षणे तृतीया। नात्यन्तम् अहेतवः कैवल्ये विभूतयः किं तु न साक्षाद् इत्य् अर्थः। ज्ञानं विवेकजम् उपक्रान्तं यच् च पारम्पर्येण कारणं तद् अउपचारिकं न तु मुख्यं, परमार्थस् तु ख्यातिर् एव मुख्यम् इत्य् अर्थः। ज्ञानाद् इति प्रसंख्यानाद् इत्य् अर्थः॥3.55॥

"अत्रान्तरङ्गाण्य् अङ्गानि परिणामाः प्रपञ्चिताः। संयमाद् भूतसंयोगस् तासु ज्ञानं विवेकजम्" इति ॥

**इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्ववैशारद्यां विभूतिपादस् तृतीयः॥3॥**

# तत्त्ववैशारद्यां कैवल्यपादः

https://sa.wikisource.org/s/9tr

**तत्त्ववैशारदी**

तत्र चतुर्थः कैवल्यपादः।

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः॥4.1॥

तद् एवं प्रथमद्वितीयतृतीयपादैः समाधितत्साधनतद्विभूतयः प्राधान्येन व्युत्पादिताः। इतरत् तु प्रासङ्गिकम् अउपोद्घातिकं चोक्तम् इहेदानीं तद्धेतुकं कैवल्यं व्युत्पादनीयम्। न चैतत् कैवल्यभागीयं चित्तं परलोकं च परलोकिनं विज्ञानातिरिक्तं चित्तकरणकसुखाद्यात्मकशब्दाद्युपभोक्तारम् आत्मानं च प्रसंख्यानपरमकाष्ठां च विना व्युत्पाद्य शक्यं वक्तुम् इति तद् एतत् सर्वम् अत्र पादे व्युत्पादनीयम् इतरच् च प्रसङ्गाद् उपोद्घाताद् वा। तत्र प्रथमं सिद्धचित्तेषु कैवल्यभागीयं चित्तं निर्धारयितुकामः पञ्चतयीं सिद्धिम् आह --- जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः। व्याचष्टे --- देहान्तरितेति। स्वर्गोपभोगभागीयात् कर्मणो मनुष्यजातीयाचरितात् कुतश्चिन् निमित्ताल् लब्धपरिपाकात् क्वचिद् देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिर् अणिमाद्या भवतीति। ओषधिसिद्धिम् आह --- असुरभवनेष्व् इति। मनुष्यो हि कुतश्चिन् निमित्ताद् असुरभवनम् उपसंप्राप्तः कमनीयाभिर् असुरकन्याभिर् उपनीतं रसायनम् उपयुज्याजरामरणत्वम् अन्याश् च सिद्धीर् आसादयति। इहैव वा रसायनोपयोगेन यथा माण्डव्यो मुनी रसोपयोगाद् विन्ध्यवासीति। मन्त्रसिद्धिम् आह --- मन्त्रैर् इति। तपःसिद्धिम् आह --- तपसेति। संकल्पसिद्धिम् आह --- कामरूपीति। यद् एव कामयतेऽणिमादि तद् एकपदेऽस्य भवतीति। यत्र कामयते श्रोतुं वा मन्तुं वा तत्र तद् एव शृणोति मनुते वेति। आदिशब्दाद् दर्शनादयः संगृहीता इति॥4.1॥

जात्यन्तरपरिणामः प्रकृत्यापूरात्॥4.2॥

समाधिजाः सिद्धयो व्याख्याता अधस्तने पादे। अथ चतसृषु सिद्धिष्व् अउषधादिसाधनासु तेषाम् एव कायेन्द्रियाणां जात्यन्तरपरिणतिर् इष्यते। सा पुनर् न तावद् उपादानमात्रात्। न हि तावन्मात्रम् उपादानं न्यूनाधिकदिव्यादिव्यभावेऽस्य भवति। नो खल्व् अविलक्षणं कारणं कार्यवैलक्षण्यायालम्। मास्याकस्मिकत्वं भूद् इत्य् आशङ्क्य पूरयित्वा सूत्रं पठति --- तत्र कायेन्द्रियाणाम् अन्यजातीयपरिणतानां --- जात्यन्तपरिणामः प्रकृत्यापूरात्। मनुष्यजातिपरिणतानां कायेन्द्रियाणां यो देवतिर्यग्जातिपरिणामः स खलु प्रकृत्यापूरात्। कायस्य हि प्रकृतिः पृथिव्यादीनि भूतानि। इन्द्रियाणां च प्रकृतिर् अस्मिता, तदवयवानुप्रवेश आपूरस् तस्माद् भवति। तद् इदम् आह --- पूर्वपरिणामेति। ननु यद्य् आपूरेणानुग्रहः कस्मात् पुनर् असौ न सदातन इत्य् अत आह --- धर्मादीति। तद् अनेन तस्यैव शरीरस्य बाल्यकौमारयौवनवार्धकादीनि च न्यग्रोधधानायां न्यग्रोधतरुभावश् च वह्निकणिकायास् तृणराशिनिवेशिताया वा प्रोद्भवज्ज्वालासहस्रसमालिङ्गितगगनमण्डलत्वं च व्याख्यातम्॥4.2॥

निमित्तम् अप्रयोजकं प्रकृतीनां वरणभेदस् तु ततः क्षेत्रिकवत्॥4.3॥

प्रकृत्यापूराद् इत्य् उक्तं तत्रेदं संदिह्यते --- किम् आपूरः प्रकृतीनां स्वाभाविको धर्मादिनिमित्तो वेति। किं प्राप्तं सतीष्व् अपि प्रकृतिषु कदाचिद् आपूराद् धर्मादिनिमित्तश्रवणाच् च तन्निमित्त एवेति प्राप्तम्। एवं प्राप्त आह --- निमित्तम् अप्रयोजकं प्रकृतीनां वरणभेदस् तु ततः क्षेत्रिकवत्। सत्यं धर्मादयो निमित्तं न तु प्रयोजकास् तेषाम् अपि प्रकृतिकार्यत्वात्। न च कार्यं कारणं प्रयोजयति तस्य तदधीनोत्पत्तितया कारणपरतन्त्रत्वात्। स्वतन्त्रस्य च प्रयोजकत्वात्। न खलु कुलालम् अन्तरेण मृद्दण्डचक्रसलिलादय उत्पित्सितेनोत्पन्नेन वा घटेन प्रयुज्यन्ते। किं तु स्वतन्त्रेण कुलालेन। न च पुरुषार्थोऽपि प्रवर्तकः। किं तु तदुद्देशेनेश्वरः। उद्देश्यतामात्रेण पुरुषार्थः प्रवर्तक इत्य् उच्यते। उत्पित्सोस् त्व् अस्य पुरुषार्थस्याव्यक्तस्य स्थितिकारणत्वं युक्तम्। न चैतावता धर्मादीनाम् अनिमित्तता प्रतिबन्धापनयनमात्रेण क्षेत्रिकवद् उपपत्तेर् ईश्वरस्यापि धर्माधिष्ठानार्थं प्रतिबन्धापनय एव व्यापारो वेदितव्यः। तद् एतन् निगदव्याख्यातेन भाष्येणोक्तम्॥4.3॥

निर्माणचित्तान्य् अस्मितामात्रात्॥4.4॥

प्रकृत्यापूरेण सिद्धीः समर्थ्य सिद्धिविनिर्मितनानाकायवर्तिचित्तैकत्वनानात्वे विचारयति --- यदा त्व् इति। तत्र नानामनस्त्वे कायानां प्रतिचित्तम् अभिप्रायभेदाद् एकाभिप्रायानुरोधश् च परस्परप्रतिसंधानं च न स्यातां पुरुषान्तरवत्। तस्माद् एकम् एव चित्तं प्रदीपवद् विसारितया बहून् अपि निर्माणकायान् व्याप्नोतीति प्राप्त आह --- निर्माणचित्तान्य् अस्मितामात्रात्। यद् यावज् जीवच्छरीरं तत् सर्वम् एकैकासाधारणचित्तान्वितं दृष्टम्। तद्यथा चैत्रमैत्रादिशरीरम्। तथा च निर्माणकाया इति सिद्धं तेषाम् अपि प्रातिस्विकं मन इत्य् अभिप्रायेणाह --- अस्मितामात्रम् इति॥

4.4॥

प्रवृत्तिभेदे प्रयोजकं चित्तम् एकम् अनेकेषाम्॥4.5॥

यद् उक्तम् अनेकचित्तत्व एकाभिप्रायानुरोधश् च प्रतिसंधानं च न स्याताम् इति तत्रोत्तरं सूत्रम् --- प्रवृत्तिभेदे प्रयोजकं चित्तम् एकम् अनेकेषाम्। अभविष्यद् एष दोषो यदि चित्तम् एकं नानाकायवर्ति मनोनायकं न निरमास्यत्, तन्निर्माणे त्व् अदोषः। न चैकं गृहीत्वा कृतं प्रातिस्विकैर् मनोभिः कृतं वा नायकनिर्माणेन निजस्यैव मनसो नायकत्वाद् इति वाच्यम्। प्रमाणसिद्धस्य नियोगपर्यनुयोगानुपपत्तेर् इति। अत्र पुराणं भवति ---

"एकस् तु प्रभुशक्त्या वै बहुधा भवतीश्वरः। भूत्वा यस्मात् तु बहुधा भवत्य् एकः पुनस् तु सः॥ तस्माच् च मनसो भेदा जायन्ते चैत एव हि। ( 66.143) एकधा स द्विधा चैव त्रिधा च बहुधा पुनः॥ योगीश्वरः शरीराणि करोति विकरोति च। प्राप्नुयाद् विषयान् कैश्चित् कैश्चिद् उग्रं तपश् चरेत्॥ संहरेच् च पुनस् तानि सूर्यो रश्मिगणान् इव" ( 66.152) इति॥

तद् एतेनाभिप्रायेणाह --- बहूनां चित्तानाम् इति॥4.5॥

तत्र ध्यानजम् अनाशयम्॥4.6॥

तद् एवम् उदितेषु पञ्चसु सिद्धचित्तेष्व् अपवर्गभागीयं चित्तं निर्धारयति --- तत्र ध्यानजम् अनाशयम्। आशेरत इत्य् आशयाः कर्मवासनाः क्लेशवासनाश् च। त एते न विद्यन्ते यस्मिंस् तद् अनाशयं चित्तम् अपवर्गभागीयं भवतीत्य् अर्थः। यतो रागादिनिबन्धना प्रवृत्तिर् नास्त्य् अतो नास्ति पुण्यपापाभिसंबन्धः। कस्मात् पुना रागादिजनिता प्रवृत्तिर् नास्तीत्य् अत आह --- क्षीणक्लेशत्वाद् इति। ध्यानजस्यानाशयस्य मनोऽन्तरेभ्यो विशेषं दर्शयितुम् इतरेषाम् आशयवत्ताम् आह --- इतरेषां त्व् इति॥4.6॥

कर्माशुक्लाकृष्णं योगिनस् त्रिविधम् इतरेषाम्॥4.7॥

तत्रैव च हेतुपरं सूत्रम् अवतारयति --- यत इति। कर्माशुक्लाकृष्णं योगिनस् त्रिविधम् इतरेषाम्। पदं स्थानम्। चर्तुषु समवेता चतुष्पदी। यद् यावद् बहिःसाधनसाध्यं तत्र सर्वत्रास्ति कस्यचित् पीडा। न हि व्रीह्यादिसाधनेऽपि कर्मणि परपीडा नास्त्य् अवघातादिसमये ऽपि पिपीलिकादिवधसंभवात्। अन्ततो बीजादिवधेन स्तम्बादिभेदोत्पत्तिप्रतिबन्धात्। अनुग्रहश् च दक्षिणादिना ब्राह्मणादेर् इति। शुक्ला तपःस्वाध्यायध्यानवताम् असंन्यासिनाम्। शुक्लत्वम् उपपादयति --- सा हीति। अशुक्लाकृष्णा संन्यासिनाम्। संन्यासिनो दर्शयति --- क्षीणेति। कर्मासंभवात्। कर्मसंन्यासिनो हि न क्वचिद् बहिःसाधनसाध्ये कर्मणि प्रवृत्ता इति न चैषाम् अस्ति कृष्णः कर्माशयः। योगानुष्ठानसाध्यस्य कर्माशयफलस्येश्वरे समर्पणान् न शुक्लः कर्माशयः। निरत्ययफलो हि शुक्ल उच्यते। यस्य फलम् एव नास्ति कुतस् तस्य निरत्ययफलत्वम् इत्य् अर्थः। तद् एवं चतुष्टयीं कर्मजातिम् उक्त्वा कतमा कस्येत्य् अवधारयति --- तत्राशुक्लम् इति॥4.7॥

ततस् तद्विपाकानुगुणानाम् एवाभिव्यक्तिर् वासन्आनाम्॥4.8॥

कर्माशयं विविच्य क्लेशाशयगतिम् आह --- ततस् तद्विपाकानुगुणानाम् एवाभिव्यक्तिर् वासनानाम्। यज्जातीयस्य पुण्यजातीयस्यापुण्यजातीयस्य वा कर्मणो यो विपाको दिव्यो वा नारको वा जात्यायुर्भोगस् तस्य विपाकस्यानुगुणाः। ता एवाह --- या वासनाः कर्मविपाकम् अनुशेरतेऽनुकुर्वन्ति। दिव्यभोगजनिता हि दिव्यकर्मविपाकानुगुणा वासनाः। न हि मनुष्यभोगवासनाभिव्यक्तौ दिव्यकर्मफलोपभोगसंभवः। तस्मात् स्वविपाकानुगुणा एव वासनाः कर्माभिव्यञ्जनीया इति भाष्यार्थः॥4.8॥

जातिदेशकालव्यवहितानाम् अप्य् आनन्तर्यं स्मृतिसंस्कारयोर् एकरूपत्वात्॥4.9॥

स्याद् एतत्। मनुष्यस्य प्रायणानन्तरम् अधिगतमार्जारभावस्यानन्तरतया मनुष्यवासनाया एवाभिव्यक्त्वा भवितव्यम्। न खल्व् अस्ति संभवो यद् अनन्तरदिवसानुभूतं न स्मर्यते व्यवहितदिवसानुभूतं च स्मर्यत इत्य् अत आह --- जातिदेशकालव्यवहितानाम् अप्य् आनन्तर्यं स्मृतिसंस्कारयोर् एकरूपत्वात्। भवतु वृषदंशवासनाया जात्यादिव्यवधिस् तथापि तस्याः फलत आनन्तर्यं वृषदंशविपाकेन कर्मणा तस्या एव स्वविपाकानुगुणाया अभिव्यक्तौ तत्स्मरणसमुत्पादाद् इत्य् आह --- वृषदंशविपाकोदय इति। उदेत्य् अस्माद् इत्य् उदयः कर्माशयः। पुनश् च स्वव्यञ्जकाञ्जन एवोदियात्, अभिव्यज्येत विपाकारम्भाभिमुखः क्रियेतेत्य् अर्थः। अभिसंस्कारक्रिया उपादाय गृहीत्वा व्यज्येत। यदि व्यज्येत स्वविपाकानुगुणा एव वासना गृहीत्वा व्यज्येतेत्य् अर्थः। आनन्तर्यम् एव फलतः कारणद्वारकम् उपपाद्य कार्यद्वारकम् उपपादयति --- कुतश् च स्मृतीति। एकरूपता सादृश्यम्। तद् एवाह --- यथेति। नन्व् अनुभवसरूपाश् चेत् संस्कारास् तथा सत्य् अनुभवा विशरारव इत्य् एतेऽपि विशरारवः कथं चिरभाविनेऽनुभवाय कल्पेरन्न् इत्य् अत आह --- ते च कर्मवासनानुरूपाः। यथापूर्वं स्थायि क्षणिककर्मनिमित्तम् अप्य् एवं

क्षणिकानुभवनिमित्तोऽपि संस्कारः स्थायी किंचिद् भेदाधिष्ठानं च सारूप्यम् अन्यथाभेदे तत्त्वेन सादृश्यानुपपत्तेर् इत्य् अर्थः। सुगमम् अन्यत्॥ 4.9॥

तासाम् अनादित्वं चाशिषो नित्यत्वात्॥4.10॥

स्यात् एतद् व्यज्येरन् पूर्वपूर्वतरजन्माभिसंस्कृता वासनाः। यदि पूर्वपूर्वतरजन्मसद्भावे प्रमाणं स्यात् तद् एव तु नास्ति। न च जातमात्रस्य जन्तोर् हर्षशोकदर्शनमात्रं प्रमाणं भवितुम् अर्हति, पद्मादिसंकोचविकासवत् स्वाभाविकत्वेन तदुपपत्तेर् इत्य् अत आह --- तासाम् अनादित्वं चाशिषो नित्यत्वात्। तासां वासनानाम् अनादित्वं च न केवलम् आनन्तर्यम् इति चार्थः। आशिषो नित्यत्वात्। आत्माशिषो वासनानाम् अनादित्वे नित्यत्वाव्यभिचाराद् इति। ननु स्वाभाविकत्वेनाप्य् उपपत्तेर् असिद्धम् आशिषो नित्यत्वम् इत्य् अत आह --- येयम् इति। नास्तिकः पृच्छति --- कस्मात्। उत्तरं --- जातमात्रस्य जन्तोर् इति। अत एवैतस्मिन् जन्मन्य् अननुभूतमरणधर्मकस्य मरणम् एव धर्मः सोऽननुभूतो येन स तथोक्तस् तस्य मातुर् अङ्कात् प्रस्खलतः कम्पमानस्य माङ्गल्यचक्रादिलाञ्छितं तदुरःसूत्रम् अतिगाढं पाणिग्राहम् अवलम्बमानस्य बालकस्य कम्पभेदानुमिता द्वेषानुषक्ते दुःखे या स्मृतिस् तन्निमित्तो मरणत्रासः कथं भवेद् इति। ननूक्तं स्वभावाद् इत्य् अत आह --- न च स्वाभाविकं वस्तु निमित्तम् उपादत्ते गृह्णाति स्वोत्पत्तौ। एतद् उक्तं भवति --- बालकस्येदृशो दृश्यमानः कम्पो भयनिबन्धन ईदृशकम्पत्वाद् अस्मदादिकम्पवत्। बालकस्य भयं द्वेषदुःखस्मृतिनिमित्तं भयत्वाद् अस्मदादिभयवत्। आगामिप्रत्यवायोत्प्रेक्षालक्षणं च भयं न दुःखस्मृतिमात्राद् भवति, अपि तु यतो बिभेति तस्य प्रत्यवायहेतुभावम् अनुमाय संप्रत्य् अपि प्रत्यवायं भयं च विदध्याद् इति शङ्कते। तस्माद् यज्जातीयाद् अनुभूतचराद् द्वेषानुषक्तं दुःखम् उपपादितं तस्य स्मरणात् तज्जातीयस्यानुभूयमानस्य तद्दुःखहेतुत्वम् अनुमाय ततो बिभेति। न च बालकेनास्मिन् जन्मनि स्खलनस्यान्यत्र दुःखहेतुत्वम् अवगतम्। न च तादृशं दुःखम् उपलब्धम्। तस्मात् प्राग्भवीयो ऽनुभवः परिशिष्यते। तच् चैतद् एवं प्रयोगम् आरोहति --- जातमात्रस्य बालस्य स्मृतिः पूर्वानुभवनिबन्धना स्मृतित्वाद् अस्मदादिस्मृतिवद् इति। न च पद्मसंकोचविकासाव् अपि स्वाभाविकौ। न हि स्वाभाविकं कारणान्तरम् अपेक्षते, वह्नेर् अउष्ण्यं प्रत्य् अपि कारणान्तरापेक्षाप्रसङ्गात्। तस्माद् आगन्तुकम् अरुणकरसंपर्कमात्रम् एव कमलिनीविकासकारणम्। संकोचकारणं च संस्कारः स्थितिस्थापक इति। एवं स्मिताद्यनुमितहर्षादयोऽपि प्राचि भवे हेतवो वेदितव्याः। तद् आस्तां तावत् प्रकृतम् उपसंहरति --- तस्माद् इति। निमित्तं लब्धविपाककालं कर्म। प्रतिलम्भोऽभिव्यक्तिः। प्रसङ्गतश् चित्तपरिमाणविप्रतिपत्तिं निराचिकीर्षुर् विप्रतिपत्तिम् आह --- घटप्रासादेति। देहप्रदेशवर्तिकार्यदर्शनाद् देहाद् बहिः सद्भावे चित्तस्य न प्रमाणम् अस्ति। न चैतद् अणुपरिमाणं दीर्घशष्कुलीभक्षणादाव् अपर्यायेण ज्ञानपञ्चकानुत्पादप्रसङ्गात्। न चाननुभूयमानक्रमकल्पनायां प्रमाणम् अस्ति। न चैकम् अणु मनो नानादेशैर् इन्द्रियैर् अपर्यायेण संबन्धुम् अर्हति। तत् पारिशेष्यात् कायपरिमाणं चित्तं घटप्रासादवर्तिप्रदीपवत्। संकोचविकाशौ पुत्तिकाहस्तिदेहयोर् अस्योत्पत्स्येते। शरीरपरिमाणम् एवाकारः परिमाणं यस्येत्य् अपरे प्रतिपन्नाः। नन्व् एवं कथम् अस्य क्षेत्रबीजसंयोगः। न खल्व् एतद् अनाश्रयं मृतशरीरान् मातृपितृदेहवर्तिनी लोहितरेतसी प्राप्नोति परतन्त्रत्वात्। न हि स्थाण्वादिष्व् अगच्छत्सु तच्छाया गच्छति। न चागच्छति पटे तदाश्रयं चित्रं गच्छति। तथा च न संसारः स्याद् इत्य् अत आह --- तथा चान्तराभावः संसारश् च युक्त इति। तथा च शरीरपरिमाणत्वे देहान्तरप्राप्तये पूर्वदेहत्यागो देहान्तरप्राप्तिश् चान्तरास्यातिवाहिकशरीरसंयोगाद् भवतस् तेन खल्व् अयं देहान्तरे संचरेत्। तथा च पुराणम् ---

"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" ( 3.297.17) इति।

सोऽयम् अन्तराभावः। अत एव संसारश् च युक्त इति। तद् एतद् अमृष्यमाणः स्वमतम् आह --- वृत्तिर् एवास्य विभुनश् चित्तस्य संकोचविकासिनीत्य् आचार्यः स्वयंभूः प्रतिपेदे। इदम् अत्राकूतं --- यद्य् अनाश्रयं चित्तं न देहान्तरसंचारि कथम् एतद् आतिवाहिकम् आश्रयते, तत्रापि देहान्तरकल्पनायाम् अनवस्था। न चास्य देहान् निष्कर्षः सातिवाहिकस्य संभव्अति। निष्कृष्टस्य चेतसस् तत्संबन्धात्। अस्तु तर्हि सूक्ष्मशरीरम् एवा सर्गाद् आ च महाप्रलयान् नियतं चित्तानाम् अधिष्ठानं षाट्कौशिकशरीरम् अध्यवर्ति। तेन हि चित्तम् आ सत्यलोकाद् आ चावीचेस् तत्र तत्र शरीरे संचरति। निष्कर्षश् चास्योपपन्नः षाट्कौशिकात् कायात्। तत्र हि तदन्तराभावस् तस्य नियतत्वात्। न चास्यापि सद्भावे प्रमाणम् अस्ति। न खल्व् एतद् अध्यक्षगोचरः। न च संसारोऽस्यानुमानम्। आचार्यमतेनाप्य् उपपत्तेः। आगमस् तु पुरुषस्य निष्कर्षम् आह। न च चित्तं वा सूक्ष्मशरीरं वा पुरुषः किं तु चितिशक्तिर् अप्रतिसंक्रमा। न चास्या निष्कर्षः संभवतीत्य् अउपचारिको व्याख्येयः। तथा च चितेश् चित्तस्य च तत्र तत्र वृत्त्यभाव एव निष्कर्षार्थः। यच् च स्मृतीतिहासपुराणेषु मरणानन्तरं प्रेतशरीरप्राप्तिस् तद्विमोकश् च सपिण्डीकरणादिभिर् इत्य् उक्तं तद् अनुजानीमः। आतिवाहिकत्वं तस्य न मृष्यामहे। न चात्रास्ति कश्चिद् आगमः। लब्धशरीर एव च यमपुरुषैर् अपि पाशबद्धो नीयते। न त्व् आतिवाहिकशरीरः। तस्माद् आहंकारिकत्वाच् चेतसो ऽहंकारस्य च गगनमण्डलवत् त्रैलोक्यव्यापित्वाद् विभुत्वं मनसः। एवं चेद् अस्य वृत्तिर् अपि विभ्वीति सर्वज्ञतापत्तिर् इत्य् अत उक्तं वृत्तिर् एवास्येति। स्याद् एतत्। चित्तमात्राधीनाया वृत्तेः संकोचविकासौ कुतः कादाचित्काव् इत्य् अत आह --- तच् च चित्तं धर्मादिनिमित्तापेक्षम्। वृत्तौ निमित्तं विभजते --- निमित्तं चेति। आदिग्रहणेनेन्द्रियधनादयो गृह्यन्ते। श्रद्धादीत्य् अत्रापि वीर्यस्मृत्यादयो गृह्यन्ते। आन्तरत्वे संमतिम् आचार्याणाम् आह --- तथा चोक्तम्। विहारो व्यापारः। प्रकृष्टं शुक्लं, तयोर् बाह्याभ्यन्तरयोर् मध्ये। ज्ञानवैराग्ये तज्जनितो धर्मः (तज्जनितौ धर्मौ) केन बाह्यसाध्येन धर्मेणातिशय्येते अभिभूयेते। ज्ञानवैराग्यजाव् एव धर्मौ तम् अभिभवतः, बीजभावाद् अपनयत इत्य् अर्थः। अत्रैव सुप्रसिद्धम् उदाहरणम् आह --- दण्डकारण्यम् इति॥4.10॥

हेतुफलाश्रयालम्बनैः संगृहीतत्वाद् एषाम् अभावे तदभावः॥4.11॥

अथैताश् चित्तवृत्तयो वासनाश् चानादयश् चेत् कथम् आसाम् उच्छेदः। न खलु चितिशक्तिर् अनादिर् उच्छिद्यत इत्य् अत आह --- हेतुफलाश्रयालम्बनैः संगृहीतत्वाद् एषाम् अभावे तदभावः। अनादेर् अपि समुच्छेदो दृष्टः। तद्यथानागतत्वस्येति सव्यभिचारत्वाद् असाधनम्। चितिशक्तिस् तु विनाशकारणाभावान् न विनश्यति, न त्व् अनादित्वात्। उक्तं च वासनानाम् अनादीनाम् अपि समुच्छेदे कारणं सूत्रेणेति। अनुग्रहोपघाताव् अपि धर्माधर्मादिनिमित्तम् उपलक्षयतः। तेन सुरापानादयोऽपि संगृहीता भवन्ति। नेत्री नायिका। अत्रैव हेतुम् आह --- मूलम् इति। प्रत्युत्पन्नता वर्तमानता न तु धर्मस्वरूपोत्पादः। अत्रैव हेतुम् आह --- न हीति। यद् अभिमुखीभूतं वस्तु कामिनीसंपर्कादि। व्यापकाभावे व्याप्यस्याभाव इति सूत्रार्थः॥4.11॥

अतीतानागतं स्वरूपतोऽस्त्य् अध्वभेदाद् धर्माणाम्॥4.12॥

उत्तरसूत्रम् अवतारयितुं शङ्कते --- नास्तीति। असत इति तु संपातायातं निदर्शनाय वा। अतीतानागतं स्वरूपतो ऽस्त्य् अध्वभेदाद् धर्माणाम्। नासताम् उत्पादो न सतां विनाशः किं तु सताम् एव धर्माणाम् अध्वभेदपरिणाम एवोदयव्ययाव् इति सूत्रार्थः। अनुभूता प्राप्ता येन व्यक्तिस् तत् तथा। संप्रति व्यक्तिर् नास्तीति यावत्। इतश् च त्रैकाल्ये ऽपि धर्मः सन्न् इत्य् आह --- यदि चेति। न ह्य् असञ्ज्ञानविषयः संभवतीति निरुपाख्यत्वाद् विषयावभासं हि विज्ञानं नासति विषये भवति। त्रैकाल्यविषयं च विज्ञानं योगिनाम् अस्मदादीनां च विज्ञानम् असति विषये नोत्पन्नं स्यात्। उत्पद्यते च। तस्माद् अतीतानागते सामान्यरूपेण समनुगते स्त इति। एवम् अनुभवतो ज्ञानं विषयसत्त्वे हेतुर् उक्तम्। उद्देश्यत्वाद् अप्य् अनागतस्य विषयत्वेन सत्त्वम् एवेत्य् आह --- किं च भोगभागीयस्येति। कुशलो निपुणः। अनुष्ठेयेऽपि च यद् यन् निमित्तं तत् सर्वं नैमित्तिके सत्य् एव विशेषम् आधत्ते। यथा काण्डलाववेदाध्यायादयः। न खल्व् एते काण्डलावादयो ऽसन्तम् उत्पादयन्ति। सत एव तु तत्प्राप्तिविकारौ कुर्वन्ति। एवं कुलालादयोऽपि सत एव घटस्य वर्तमानीभावहेतव इत्य् आह --- सतश् चेति। यदि तु वर्तमानत्वाभावाद् अतीतानागतयोर् असत्त्वं हन्त भो वर्तमानस्याप्य् अभावोऽतीतानागतत्वाभावात्। अध्वविशिष्टतया तु सत्त्वं त्रयाणाम् अप्य् अविशिष्टम् इत्य् अभिप्रायेणाह --- धर्मी चेति। प्रत्येकम् अवस्थानं प्रत्यवस्थितिर् इति। द्रव्यत इति द्रव्ये धर्मिणि सार्वविभक्तिकस् तसिः। यद्य् अतीतानागताव् अतीतानागतत्वे न स्तस् तर्हि वर्तमानसमये तत्त्वाभावान् न स्याताम् इत्य् अत आह --- एकस्य चेति। प्रकृतम् उपसंहरति --- इति नाभूत्वा भाव इति॥4.12॥

ते व्यक्तसूक्ष्मा गुणात्मानः॥4.13॥

स्याद् एतत्। अयं तु नानाप्रकारो धर्मिधर्मावस्थापरिणामरूपो विश्वभेदप्रपञ्चो न प्रधानाद् एकस्माद् भवितुम् अर्हति। न ह्य् अविलक्षणात् कारणात् कार्यभेदसंभव इत्य् अत आह --- ते व्यक्तसूक्ष्मा गुणात्मानः। ते त्र्यध्वानो धर्मा व्यक्ताश् च सूक्ष्माश् च गुणात्मानो न त्रैगुण्यातिरिक्तम् एषाम् अस्ति कारणम्। वैचित्र्यं तु तदाहितानादिक्लेशवासनानुगताद् वैचित्र्यात्। यथोक्तं वायुपुराणे ---

"वैश्वरूप्यात् प्रधानस्य परिणामोऽयम् अद्भुतः" [वायुपुराणम् 53.120] इति।

व्यक्तानां पृथिव्यादीनाम् एकादशेन्द्रियाणां च वर्तमानानाम् अतीतानागतत्वं षडविशेषा यथायोगं भवन्ति। संप्रति विश्वस्य नित्यानित्यरूपे विभजन् नित्यरूपम् आह --- सर्वम् इदम् इति। दृश्यमानं संनिवेशः संस्थानभेदवान् परिणाम इत्य् अर्थः। अत्रैव षष्टितन्त्रशास्त्रस्यानुशिष्टिः। मायेव न तु माया। सुतुच्छकं विनाशि। यथा हि मायाह्यायैवान्यथा भवति एवं विकारा अप्य् आविर्भावतिरोभावधर्माणः प्रतिक्षणम् अन्यथा। प्रकृतिर् नित्यतया मायाविधर्मिणी परमार्थेति॥4.13॥

परिणामैकत्वाद् वस्तुतत्त्वम्॥4.14॥

भवतु त्रैगुण्यस्येत्थं परिणामवैचित्र्यम् एकस् तु परिणामः पृथिवीति वा तोयम् इति वा कुत आत्मन एकत्वविरोधाद् इत्य् आशङ्क्य सूत्रम् अवतारयति --- यदा तु सर्वे गुणा इति। परिणामैकत्वाद् वस्तुतत्त्वम्। बहूनाम् अप्य् एकः परिणामो दृष्टः। तद्यथा गवाश्वमहिषमातङ्गानां रुमान्इक्षिप्तानाम् एको लवणत्वजातीयलक्षणः परिणामो वर्तितैलानलानां च प्रदीप इति। एवं बहुत्वेऽपि गुणानां परिणामैकत्वं, ततस् तन्मात्रभूतभौतिकानां प्रत्येकं तत्त्वम् एकत्वम्। ग्रहणात्मकानां सत्त्वप्रधानतया प्रकाशात्मनाम् अहंकारावान्तरकार्याणां करणभावेनैकः परिणामः श्रोत्रम् इन्द्रियम्। तेषाम् एव गुणानां तमःप्रधानतया जडत्वेन ग्राह्यात्मकानां शब्दतन्मात्रभावेनैकः परिणामः शब्दो विषयः। शब्द इति शब्दतन्मात्रम्। विषय इति जडत्वम् आह न तु तन्मात्रस्य श्रोत्रविषयत्वसंभव इति। शेषं सुगमम्। अथ विज्ञानवादिनं वैनाशिकम् उत्थापयति --- नास्त्य् अर्थो विज्ञानविसहचर इति। यदि हि भूतभौतिकानि विज्ञानमात्राद् भिन्नानि भवेयुस् ततस् तदुत्पत्तिकारणम् ईदृशं प्रधानं कल्प्येत, न तु तानि विज्ञानातिरिक्तानि सन्ति परमार्थतः। तत् कथं प्रधानकल्पनं कथं च ग्रहणानाम् इन्द्रियाणाम् अहंकारविकाराणां कल्पनेति। तथा हि --- जडस्यार्थस्य स्वयम् अप्रकाशत्वान् नास्त्य् अर्थो विज्ञानविसहचरः। साहचर्यं संबन्धः। तदभावो विसहचरत्वम्। विर् अभावार्थः। विज्ञानासंबन्धो नास्ति व्यवहारयोग्य इत्य् अर्थः। अस्ति तु ज्ञानम् अर्थविसहचरं तस्य स्वयंप्रकाशत्वेन स्वगोचरास्तिताव्यवहारे कर्तव्ये जडम् अर्थं प्रत्यपेक्षाभावात्। तद् अनेन वेद्यत्वसहोपलम्भनियमौ सूचितौ विज्ञानवादिना। तौ चैवं प्रयोगम् आरोहतः --- यद् वेद्यते येन वेदनेन तत् ततो न

भिद्यते। यथा ज्ञानस्यात्मा। वेद्यन्ते च भूतभौतिकानीति विरुद्धव्याप्तोपलब्धिर् निषेध्यभेदविरुद्धेनाभेदेन व्याप्तं वेद्यत्वं दृश्यमानं स्वव्यापकम् अभेदम् उपस्थापयत् तद्विरुद्धं भेदं प्रतिक्षिपतीति। तथा यद् येन नियतसहोपलम्भं तत् ततो न भिद्यते। यथैकस्माच् चन्द्राद् द्वितीयश् चन्द्रः। नियतसहोपलम्भश् चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः। निषेध्यभेदव्यापकानियमविरुद्धो नियमोऽनियमं निवर्तयंस् तद्व्याप्तं भेदं प्रतिक्षिपतीति। स्याद् एतत्। अर्थश् चेन् न भिन्नो ज्ञानात् कथं भिन्नवत् प्रतिभासत इत्य् अत आह --- कल्पितम् इति। यथाहुर् वैनाशिकाः ---

"सहोपलम्भनियमाद् अभेदो नीलतद्धियोः। भेदश् च भ्रान्तिविज्ञानैर् दृश्य इन्दाव् इवाद्वये" इति॥

कल्पितत्वं विशदयति --- ज्ञानपरिकल्पनेति। निराकरोति --- त इति। ते कथं श्रद्धेयवचनाः स्युर् इति संबन्धः। प्रतिज्ञानम् उपस्थितं प्रत्युपस्थितम्। कथम् --- तथेति। यथा यथावभासत इदंकारास्पदत्वेन तथा तथा स्वयम् उपस्थितं न तु कल्पनोपकल्पितं विज्ञानविषयतापन्नम्। स्वमाहात्म्येनेति विज्ञानकारणत्वम् अर्थस्य दर्शयति। यस्माद् अर्थेन स्वकीयया ग्राह्यशक्त्या विज्ञानम् अजनि तस्माद् अर्थस्य ग्राहकं तद् एवंभूतं वस्तु कथम् अप्रमाणात्मकेन विकल्पविज्ञानबलेन विकल्पस्याप्रामाणिकत्वात् तद्बलस्यापि तदात्मनोऽप्रमाणात्मकत्वं, तेन वस्तुस्वरूपम् उत्सृज्योपप्लुतं कृत्वा। उपगृह्येति क्वचिद् पाठः। तत्रापि स एवार्थः। तद् एवापलपन्तः श्रद्धातव्यवचनाः स्युर् इति। इदम् अत्राकूतम् --- सहोपलम्भनियमश् च वेद्यत्वं च हेतू संदिग्धव्यतिरेकतया नैकान्तिकौ। तथा हि --- ज्ञानाकारस्य भूतभौतिकादेर् यद् एतद् बाह्यत्वं स्थूलत्वं च भासेते न ते ज्ञाने संभवतः। तथा हि नानादेशव्यापिता स्थौल्यं विच्छिन्नदेशता च बाह्यत्वम्। न चैकविज्ञानस्य नानादेशव्यापिता विच्छिन्नदेशता चोपपद्यते। तद्देशत्वातद्देशत्वलक्षणविरुद्धधर्मसंसर्गस्यैकत्रासंभवात् संभवे वा त्रैलोक्यस्यैकत्वप्रसङ्गात्। अत एवास्तु विज्ञानभेद इति चेत्। हन्त भोः परमसूक्ष्मगोचराणां प्रत्ययानां परस्परवार्तानभिज्ञानां स्वगोचरमात्रजागरूकाणां कुतस्त्योऽयं स्थूलावभासः। न च विकल्पगोचरोऽभिलापः संसर्गाभावाद् विशदप्रतिभासत्वाच् च। न च स्थूलम् आलोचितं यतस् तदुपाधिकस्य विशदता भवेत् तत्पृष्ठभाविनः। न चाविकल्पवद् विकल्पोऽपि स्वाकारमात्रगोचरस् तस्य चास्थूलत्वान् न स्थूलगोचरो भवितुम् अर्हति। तस्माद् बाह्ये च प्रत्यये स्थूलस्य बाह्यस्य चासंभवाद् अलीकम् एतद् आस्थातव्यम्। न चालीकं विज्ञानाद् अभिन्नं विज्ञानस्य तद्वत् तुच्छत्वप्रसङ्गात्। तथा च वेद्यत्वस्याभेदव्याप्यत्वाभावात् कुतो भेदप्रतिपक्षत्वम्। सहोपलम्भनियमश् च सदसतोर् इव विज्ञानस्थौल्ययोः सतोर् अपि स्वभावाद् वा कुतश्चित् प्रतिबन्धाद् वोपपत्स्यते। तस्माद् अनैकान्तिकत्वाद् एतौ हेत्वाभासौ विकल्पमात्रम् एव बाह्याभावे प्रसुवाते। न च प्रत्यक्षमाहात्म्यं विकल्पमात्रेणापोद्यते। तस्मात् साधूक्तं कथम् अप्रमाणात्मकेन विकल्पज्ञानबलेनेति। एतेन प्रत्ययत्वम् अपि स्वप्नादिप्रत्ययदृष्टान्तेन निरालम्बनत्वसाधनम् अपास्तम्। प्रमेयविकल्पस् त्व् अवयविव्यवस्थापनेन प्रत्युक्तः। विस्तरस् तु न्यायकणिकायाम् अनुसरणीय इति तद् इह कृतं विस्तरेणेति॥4.14॥

वस्तुसाम्ये चित्तभेदात् तयोर् विभक्तः पन्थाः॥4.15॥

तद् एवम् उत्सूत्रं भाष्यकृद् विज्ञानातिरिक्तस्थापने युक्तिम् उक्त्वा सौत्रीं युक्तिम् अवतारयति --- कुतश् चैतद् इति। वस्तुसाम्ये चित्तभेदात् तयोर् विभक्तः पन्थाः। यन्नानात्वे यस्यैकत्वं तत् ततोऽत्यन्तं भिद्यते। यथा चैत्रस्य ज्ञानम् एकं भिन्नेभ्यो देवदत्तविष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते। ज्ञाननानात्वे ऽपि चार्थो न भिद्यत इति भवति विज्ञानेभ्योऽन्यः। अभेदश् चार्थस्य ज्ञानभेदेऽपि प्रमात्Qणां परस्परप्रतिसंधानाद् अवसीयते। अस्ति हि रक्तद्विष्टविमूढमध्यस्थानाम् एकस्यां योषिति प्रतीयमानायां प्रतिसंधानं या त्वया दृश्यते सैव मयापीति। तस्माद् वस्तुसाम्ये चित्तभेदाज् ज्ञानभेदात् तयोर् अर्थज्ञानयोर् विभक्तः पन्थाः स्वरूपभेदोपायः। सुखज्ञानं कान्तायां कान्तस्य, सपत्नीनां दुःखज्ञानम्। चैत्रस्य तु ताम् अविन्दतो मूढज्ञानं विषादः। स्याद् एतत्। य एकस्य चित्तेन परिकल्पितः कामिनीलक्षणोऽर्थस् तेनैवान्येषाम् अपि चित्तम् उपरज्यत इति साधारणम् उपपद्यत इत्य् अत आह --- न चान्येति। तथा सत्य् एकस्मिन् नीलज्ञानवति सर्व एव नीलज्ञानवन्तः स्युर् इति। नन्व् अर्थवादिनाम् अप्य् एकोऽर्थः कथं सुखादिभेदभिन्नविज्ञानहेतुः। न ह्य् अविलक्षणात् कारणात् कार्यभेदो युक्त इत्य् अत आह --- सांख्यपक्ष इति। एकस्यैव बाह्यस्य वस्तुनस् त्रैगुण्यपरिणामस्य त्रैरूप्यम् उपपन्नम्। एवम् अपि सर्वेषाम् अविशेषेण सुखदुःखमोहात्मकं विज्ञानं स्याद् इत्य् अत आह --- धर्मादिनिमित्तापेक्षं रजःसहितं सत्त्वं धर्मापेक्षं सुखज्ञानं जनयति। सत्त्वम् एव तु विगलितरजस्कं विद्यापेक्षं माध्यस्थ्यज्ञानम् इति। ते च धर्मादयो न सर्वे सर्वत्र पुरुषे सन्ति किं तु कश्चित् क्वचिद् इत्य् उपपन्ना व्यवस्थेति। अत्र केचिद् आहुः प्रावादुका ज्ञानसहभूर् एवार्थो भोग्यत्वात् सुखादिवद् इति। एतद् उक्तं भवति --- भवत्व् अर्थो ज्ञानाद् व्यतिरिक्तस् तथाप्य् असौ जडत्वान् न ज्ञानम् अन्तरेण शक्यः प्रतिपत्तुम्। ज्ञानेन तु भासनीयः। तथा च ज्ञानसमय एवास्ति नान्यदा प्रमाणाभावाद् इति। तद् एतद् उत्सूत्रं तावद् दूषयति भाष्यकारः --- त एतया द्वारेति। वस्तु खलु सर्वचित्तसाधारणम् अनेकक्षणपरम्परोह्यमानं परिणामात्मकम् अनुभूयते लौकिकपरीक्षकैः। तच् चेद् विज्ञानेन सह भवेन् नूनम् एवंविधम् एवं चेद् इदमंशस्योपरि कोऽयम् अनुरोधो येन सो ऽपि नापह्नूयेतेत्य् अर्थः॥4.15॥

न चैकचित्ततन्त्रं वस्तु तद् अप्रमाणकं तदा किं स्यात्॥4.16॥

मा वा भूद् इदंअंशस्यापह्नवो ज्ञानसहभूर् एवास्त्व् अर्थस् तत्राप्य् आह --- न चैकचित्ततन्त्रं वस्तु तद् अप्रमाणकं तदा किं स्यात्। यद् धि घटग्राहि चित्तं तद् यदा पटद्रव्यव्यग्रतया न घटे वर्तते। यद् वा विवेकविषयम् आसीत् तद् एव च निरोधं समापद्यते तदा घटज्ञानस्य वा विवेकज्ञानस्य वाभावाद् विवेको वा घटो वा ज्ञानभेदमात्रजीवनस् तन्नाशान् नष्ट एव स्याद् इत्य् आह --- एकचित्तेति। किं तत् स्यान् न स्याद् इत्य् अर्थः। संबध्यमानं च चित्तेन तद्वस्तु विवेको वा घटो वा कुत उत्पद्येत। नियतकारणान्वयव्यतिरेकानुविधायिभावानि हि कार्याणि न स्वकारणम्

अतिवर्त्य कारणान्तराद् भवितुम् ईशते। मा भूद् अकारणत्वे तेषां कादाचित्कत्वव्याघातः। न च तज्ज्ञानकारणत्वम् एव तत्कारणत्वम् इति युक्तम्। आशामोदकस्य मोदकस्य चोपयुज्यमानस्य रसवीर्यविपाकादिसाम्यप्रसङ्गात्। तस्मात् साधूक्तं संबध्यमानं वा (च) पुनश् चित्तेनेति। अपि च यो योऽर्वाग्भागः स सर्वो मध्यपरभागव्याप्तः। ज्ञानाधीने सद्भावे त्व् अस्याननुभूयमानत्वान् मध्यपरभागौ न स्त इति व्यापकाभावाद् अर्वाग्भागोऽपि न स्याद् इत्य् अर्थाभावात् कुतो ज्ञानसहभूर् अर्थ इत्य् आह --- ये चास्येति। अनुपस्थिता अज्ञाताः। उपसंहरति --- तस्माद् इति। सुगमं शेषम्॥4.16॥

तदुपरागापेक्षित्वाच् चित्तस्य वस्तु ज्ञाताज्ञातम्॥4.17॥

स्याद् एतद् अर्थश् चेत् स्वतन्त्रः, स च जडस्वभाव इति न कदाचित् प्रकाशेत। प्रकाशने वा जडत्वम् अप्य् अस्यापगतम् इति भावो ऽप्य् अपगच्छेत्। न जातु स्वभावम् अपहाय भावो वर्तितुम् अर्हति। न चेन्द्रियाद्याधेयो जडस्वभावस्यार्थस्य धर्मः प्रकाशत इति सांप्रतम्। अर्थधर्मत्वे नीलत्वादिवत् सर्वपुरुषसाधारण इत्य् एकः शास्त्रार्थ इति सर्व एव विद्वांसः प्रसज्येरन् न जाल्मः कश्चिद् अस्ति। न चातीतानागतयोर् धर्मः प्रत्युत्पन्नो युक्तः। तस्मात् स्वतन्त्रोऽर्थ उपलम्भविषय इति मनोरथमात्रम् एतद् इत्य् अत आह --- तदुपरागापेक्षित्वाच् चित्तस्य वस्तु ज्ञाताज्ञातम्। जडस्वभावोऽप्य् अर्थ इन्द्रियप्रणाडिकया चित्तम् उपरञ्जयति। तद् एवंभूतं चित्तदर्पणम् उपसंक्रान्तप्रतिबिम्बा चितिशक्तिश् चित्तम् अर्थोपरक्तं चेतयमानार्थम् अनुभवति, न त्व् अर्थे किंचित् प्राकट्यादिकम् आधत्ते। नाप्य् असंबद्धा चित्तेन तत्प्रतिबिम्बसंक्रान्तेर् उक्तत्वाद् इति। यद्य् अपि च सर्वगतत्वाच् चित्तस्य चेन्द्रियस्य चाहंकारिकस्य विषये नास्ति संबन्धस् तथापि यत्र शरीरे वृत्तिमच् चित्तं तेन सह संबन्धो विषयाणाम् इत्य् अयस्कान्तमणिकल्पा इत्य् उक्तम्। अयःसधर्मकं चित्तम् इति। इन्द्रियप्रणाडिकयाभिसंबन्ध्योपरञ्जयन्ति। अत एव चित्तं परिणामीत्य् आह --- वस्तुन इति॥4.17॥

सदा ज्ञाताश् चित्तवृत्तयस् तत्प्रभोः पुरुषस्यापरिणामित्वात्॥4.18॥

तद् एवं चित्तव्यतिरेकिणम् अर्थम् अवस्थाप्य तेभ्यः परिणतिधर्मकेभ्यो व्यतिरिक्तम् आत्मानम् आदर्शयितुं तद्वैधर्म्यम् अपरिणामित्वम् अस्य वक्तुं पूरयित्वा सूत्रं पठति --- यस्य तु तद् एव चित्तं विषयस् तस्य --- सदा ज्ञाताश् चित्तवृत्तयस् तत्प्रभोः पुरुषस्यापरिणामित्वात्। क्षिप्तमूढविक्षिप्तैकाग्रतावस्थितं चित्तम् आ निरोधात् सर्वदा पुरुषेणानुभूयते वृत्तिमत् तत् कस्य हेतोर् यतः पुरुषोऽपरिणामी परिणामित्वे चित्तवत् पुरुषोऽपि ज्ञाताज्ञातविषयो भवेत्। ज्ञातविषय एव त्व् अयम्। तस्माद् अपरिणामी। ततश् च परिणामिभ्योऽतिरिच्यत इति। तद् एतद् आह --- यदि चित्तवद् इति। सदा ज्ञातत्वं तु मनसः सवृत्तिकस्य तस्य यः प्रभुः स्वामी भोक्तेति यावत्। तस्य प्रभोः पुरुषस्यापरिणामित्वम् अनुमापयति। तथा चापरिणामिनस् तस्य पुरुषस्य परिणामिनश् चित्ताद् भेद इति भावः॥4.18॥

न तत् स्वाभासं दृश्यत्वात्॥4.19॥

अत्र वैनाशिकम् उत्थापयति --- स्याद् आशङ्केति। अयम् अर्थः --- स्याद् एतद् एवं यदि चित्तम् आत्मनो विषयः स्यात्, अपि तु स्वप्रकाशम् एतद् विषयाभासं पूर्वचित्तं प्रतीत्य समुत्पन्नं तत् कुतः पुरुषस्य सदाज्ञातविषयत्वं कुतस्तरां वापरिणामितया परिणामिनश् चित्ताद् भेद इति। न तत् स्वाभासं दृश्यत्वात्। भवेद् एतद् एवं यदि स्वसंवेदनं चित्तं स्यान् न त्व् एतद् अस्ति। तद् धि परिणामितया नीलादिवद् अनुभवव्याप्यं यच् चानुभवव्याप्यं न तत् स्वाभासं भवितुम् अर्हति स्वात्मनि वृत्तिविरोधात्। न हि तद् एव क्रिया च कर्मकारकं च। न हि पाकः पच्यते छिदा वा छिद्यते। पुरुषस् त्व् अपरिणामी नानुभवकर्मेति नास्मिन् स्वयंप्रकाशता न युज्यते। अपराधीनप्रकाशता ह्य् अस्य स्वयंप्रकाशता नानुभवकर्मता। तस्माद् दृश्यत्वाद् दर्शनकर्म चित्तं न स्वाभासम्। आत्मप्रकाशप्रतिबिम्बतयैव चित्तस्य तद्वृत्तिविषयाः प्रकाशन्त इति भावः। ननु दृश्योऽग्निः स्वयंप्रकाशश् च। न हि यथा घटादयोऽग्निना व्यज्यन्त एवम् अग्निर् अग्न्यन्तरेणेत्य् अत आह --- न चाग्निर् अत्रेति। कस्मात्। न हीति। मा नामाग्निर् अग्न्यन्तरात् प्रकाशिष्ट विज्ञानात् तु प्रकाशत इति न स्वयं प्रकाशत इति न व्यभिचार इत्य् अर्थः। प्रकाशश् चायम् इति। अयम् इति पुरुषस्वभावात् प्रकाशाद् व्यवच्छिनत्ति, क्रियारूपः प्रकाश इति यावत्। एतद् उक्तं भवति --- या या क्रिया सा सा सर्वा कर्तृकरणकर्मसंबन्धेन दृष्टा। यथा पाको दृष्टश् चैत्राग्नितण्डुलसंबन्धेन यथा वा प्रकाशनम्। तथा च प्रकाशोऽपि क्रियेति तयापि तथा भवितव्यम्। संबन्धश् च भेदाश्रयो नाभेदे संभवतीत्य् अर्थः। किं च स्वाभासं चित्तम् इत्य् अग्राह्यम् एव कस्यचिद् इति शब्दार्थः। स्याद् एतत्। मा भूद् ग्राह्यं चित्तम्। न हि ग्रहणस्याकारणस्याव्यापकस्य च निवृत्तौ चित्तनिवृत्तिर् इत्य् अत आह --- स्वबुद्धीति। बुद्धिश् चित्तं, प्रचारा व्यापाराः, सत्त्वाः प्राणिनः, चित्तस्य वृत्तिभेदाः क्रोधलोभादयः स्वाश्रयेण चित्तेन स्वविषयेण च सह प्रत्यात्मम् अनुभूयमानाश् चित्तस्याग्राह्यतां विघटयन्तीत्य् अर्थः। स्वबुद्धिप्रचारप्रतिसंवेदनम् एव विशदयति --- क्रुद्धो ऽहम् इति॥4.19॥

एकसमये चोभयानवधारणम्॥4.20॥

एकसमये चोभयानवधारणम्। स्वाभासं विषयाभासं चित्तम् इति ब्रुवाणो न तावद् येनैव व्यापारेणात्मानम् अवधारयति तेनैव विषयम् अपीति वक्तुम् अर्हति। न ह्य् अविलक्षणो व्यापारः कार्यभेदाय पर्याप्तस् तस्माद् व्यापारभेदोऽङ्गीकर्तव्यः। न च वैनाशिकानाम् उत्पत्तिभेदातिरिक्तोऽस्ति व्यापारः। न चैकस्या एवोत्पत्तेर् अविलक्षणायाः कार्यवैलक्षण्यसंभवः। तस्याकस्मिकत्वप्रसङ्गात्। न चैकस्योत्पत्तिद्वयसंभवः। तस्माद् अर्थस्य

च ज्ञानरूपस्य चावधारणं नैकस्मिन् समय इति। तद् एतद् भाष्येणोच्यते --- न चैकस्मिन् क्षण इति। तथा चोक्तं वैनाशिकैः ---

"भूतिर् येषां क्रिया सैव कारकं सैव चोच्यते" इति।

तस्माद् दृश्यत्वम् एतच् चित्तस्य सदातनं स्वाभासत्वम् अपनयद् द्रष्टारं च द्रष्टुर् अपरिणामित्वं च दर्शयतीति सिद्धम्॥4.20॥

चित्तान्तरदृश्ये बुद्धिबुद्धेर् अतिप्रसङ्गः स्मृतिसंकरश् च॥4.21॥

पुनर् वैनाअशिकम् उत्थापयति --- स्यान् मतिः। मा भूद् दृश्यत्वेन स्वसंवेदनम्। एवम् अप्य् आत्मा न सिध्यति। स्वसंतानवर्तिना चरमचित्तक्षणेन स्वरसनिरुद्धस्वजनकचित्तक्षणग्रहणाद् इत्य् अर्थः। समं च तज्ज्ञानत्वेनानन्तरं चाव्यवहितत्वेन समनन्तरं तेन। चित्तान्तरदृश्ये बुद्धिबुद्धेर् अतिप्रसङ्गः स्मृतिसंकरश् च। बुद्धिर् इति चित्तम् इत्य् अर्थः। नागृहीता चरमा बुद्धिः पूर्वबुद्धिग्रहणसमर्था। न हि बुद्ध्यासंबद्धा पूर्वबुद्धिर् बुद्धा भवितुम् अर्हति। न ह्य् अगृहीतदण्डो दण्डिनम् अवगन्तुम् अर्हति। तस्माद् अनवस्थैति। विज्ञानवेदनासंज्ञारूपसंस्काराः स्कन्धाः। सांख्ययोगादयः प्रवादाः सांख्याश् च योगाश् च त एवादयो येषां वैशेषिकादिप्रवादानां ते सांख्ययोगादयः प्रवादाः। सुगमम् अन्यत्॥4.21॥

चितेर् अप्रतिसंक्रमायास् तदाकारापत्तौ स्वबुद्धिसंवेदनम्॥4.22॥

स्याद् एतत्। यदि चित्तं न स्वाभासं नापि चित्तान्तरवेद्यम् आत्मनापि कथं भोक्ष्यते चित्तम्। न खल्व् आत्मनः स्वयंप्रकाशस्याप्य् अस्ति काचित् क्रिया। न च ताम् अन्तरेण कर्ता न चासंबद्धश् चित्तेन कर्मणा तस्य भोक्तातिप्रसङ्गाद् इत्य् आशयवान् पृच्छति --- कथम् इति। सूत्रेणोत्तरम् आह --- चितेर् अप्रतिसंक्रमायास् तदाकारापत्तौ स्वबुद्धिसंवेदनम्। यत् तद् अवोचद् वृत्तिसारूप्यम् इतरत्र [योगसूत्रम् 1.4] इति तद् इतः समुत्थितम्। चितेः स्वबुद्धिसंवेदनं बुद्धेस् तदाकारापत्तौ चितिप्रतिबिम्बाधारतया तद्रूपतापत्तौ सत्याम्। यथा हि चन्द्रमसः क्रियाम् अन्तरेणापि संक्रान्तचन्द्रप्रतिबिम्बम् अमलं जलम् अचलं चलम् इवालवालम् अरालम् इव चन्द्रमसम् अवभासयति एवं विनापि चितिव्यापारम् उपसंक्रान्तचितिप्रतिबिम्बं चित्तं स्वगतया क्रियया क्रियावतीम् असंगताम् अपि संगतां चितिशक्तिम् अवभासयद् भोग्यभावम् आसादयद् भोक्तृभावम् आपादयति तस्या इति सूत्रार्थः। भाष्यम् अप्य् एतद् अर्थम् असकृत् तत्र तत्र व्याख्यातम् इति न व्याख्यातम् अत्र। बुद्धिवृत्त्यविशिष्टत्वे ज्ञानवृत्तेर् आगमम् उदाहरति --- तथा चोक्तं --- न पातालम् इति। शाश्वतस्य शिवस्य ब्रह्मणो विशुद्धस्वभावस्य चितिच्छायापन्नां मनोवृत्तिम् एव चितिच्छायापन्नत्वाच् चितेर् अप्य् अविशिष्टां गुहां वेदयन्ते। तस्याम् एव गुहायां तद् गुह्यं ब्रह्म तदपनये तु स्वयंप्रकाशम् अनावरणम् अनुपसर्गं प्रद्योतते चरमदेहस्य भगवत इति॥4.22॥

द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्॥4.23॥

तद् एवं दृश्यत्वेन चित्तस्य परिणामिनस् तदतिरिक्तः पुमान् अपरिणतिधर्मोपपादितः संप्रति लोकप्रत्यक्षम् अप्य् अत्र प्रमाणयति --- अतश् चैतद् इति। अवश्यं चैतद् इत्य् अर्थः। द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्। यथा हि नीलाद्यनुरक्तं चित्तं नीलाद्यर्थं प्रत्यक्षेणैवावस्थापयति एवं द्रष्टृच्छायापत्त्या तदनुरक्तं चित्तं द्रष्टारम् अपि प्रत्यक्षेणावस्थापयति। अस्ति हि त्र्याकारं ज्ञानं नीलम् अहं संप्रत्येमीति। तस्माज् ज्ञेयवत् तज्ज्ञातापि प्रत्यक्षसिद्धोऽपि न विविच्यावस्थापितो यथा जले चन्द्रमसो बिम्बम्। न त्व् एतावता तद् अप्रत्यक्षम्। न चास्य जलगतत्वे तद् अप्रमाणम् इति चन्द्ररूपेऽप्य् अप्रमाणं भवितुम् अर्हति। तस्माच् चित्तप्रतिबिम्बतया चैतन्यगोचरापि चित्तवृत्तिर् न चैतन्यागोचरेति। तद् इदं सर्वार्थत्वं चित्तस्येति। तद् एतद् आह --- मनो हीति। न केवलं तदाकारापत्त्या मन्तव्येनार्थेनोपरक्तं मनोऽपि तु स्वयं चेति। चकारो भिन्नक्रमः पुरुषेणेत्य् अस्यानन्तरं द्रष्टव्यः। तच्छायापत्तिः पुरुषस्य वृत्तिः। इयं च चैतन्यच्छायापत्तिश् चित्तस्य वैनाशिकैर् अभ्युपेतव्या। कथम् अन्यथा चित्ते चैतन्यम् एत आरोपयां बभूवुर् इत्य् आह --- तद् अनेनेति। केचिद् वैनाशिका बाह्यार्थवादिनः। अपरे विज्ञानमात्रवादिनः। ननु यदि चित्तम् एव द्रष्ट्राकारं दृश्याकारं चानुभूयते हन्त चित्ताद् अभिन्नाव् एवास्तां द्रष्टृदृश्यौ। यथाहुः ---

"अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवान् इव लक्ष्यते" इति॥ (च्f. 3.353)

तत् कथम् एतेऽनुकम्पनीया इत्य् अत आह --- समाधिप्रज्ञायाम् इति। ते खलूक्ताभिर् उपपत्तिभिश् चित्तातिरिक्तं पुरुषम् अभ्युपगम्याप्य् अष्टाङ्गयोगोपदेशेन समाधिप्रज्ञायाम् आत्मगोचरायाम् अवतार्य बोधयितव्याः। तद्यथा --- समाधिप्रज्ञायां प्रज्ञेयोऽर्थ आत्मा प्रतिबिम्बीभूतोऽन्यः कस्मात् तस्यात्मन आलम्बनीभूतत्वात्। अथ चित्ताद् अभिन्नम् एव कस्मान् नालम्बनं भवतीति यदि युक्तिबोधितोऽपि वैयात्याद् वदेत् तत्र हेतुम् आह --- स चेद् आत्मरूपोऽर्थश् चित्तमात्रं स्यान् न तु ततो व्यतिरिक्तस् ततः कथं प्रज्ञयैव प्रज्ञारूपम् अवधार्येत स्वात्मनि वृत्तिविरोधात्। उपसंहरति --- तस्माद् इति। समीचीनोपदेशेनानुकम्पिता भवन्तीत्य् आह --- एवम् इति। जातितः स्वभावत इत्य् अर्थः॥4.23॥

तद् असंख्येयवासनाभिश् चित्रम् अपि परार्थं संहत्यकारित्वात्॥4.24॥

चित्तातिरिक्तात्मसद्भावे हेत्वन्तरम् अवतारयति --- कुतश् चेति। तद् असंख्येयवासनाभिश् चित्रम् अपि परार्थं संहत्यकारित्वात्। यद्य् अप्य् असंख्येयाः कर्मवासनाः क्लेशवासनाश् च चित्तम् एवाधिशेरते न तु पुरुषम्। तथा च वासनाधीना विपाकाश् चित्ताश्रयतया चित्तस्य भोक्तृताम् आवहन्ति, भोक्तुर् अर्थे च भोग्यम् इति सर्वं चित्तार्थं प्राप्तं, तथापि तच् चित्तम् असंख्येयवासनाविचित्रम् अपि परार्थम्। कस्मात्। संहत्यकारित्वाद् इति सूत्रार्थः। व्याचष्टे --- तद् एतद् इति। स्याद् एतच् चित्तं संहत्यापि करिष्यति स्वार्थं च भविष्यति कः खलु विरोध इति यदि कश्चिद् ब्रूयात् तं प्रत्याह --- संहत्यकारिणेति। सुखचित्तम् इति भोगम् उपलक्षयति। तेन दुःखचित्तम् अपि द्रष्टव्यम्। ज्ञानम् इत्य् अपवर्ग उक्तः। एतद् उक्तं भवति --- सुखदुःखे चित्ते प्रतिकूलानुकूलात्मके नात्मनि संभवतः। स्वात्मनि वृत्तिविरोधात्। न चान्योऽपि संहत्यकारी साक्षात् परम्परया वा सुखदुःखे विदधानस् ताभ्याम् अनुकूलनीयः प्रतिकूलनीयो वा। तस्माद् यः साक्षात् परम्परया वा न सुखदुःखयोर् व्याप्रियते स एवाभ्याम् अनुकूलनीयः प्रतिकूलनीयो वा। स च नित्योदासीनः पुरुष एवम् अपवृज्यते येन ज्ञानेन तस्यापि ज्ञेयतन्त्रत्वात् स्वात्मनि च वृत्तिविरोधान् न ज्ञानार्थत्वम्। न बाह्यविषयाद् अस्माद् अपवर्गसंभवो विदेहप्रकृतिलयानाम् अपवर्गासंभवात्। तस्मात् तज्ज्ञानम् अपि पुरुषार्थम् एव न तत् स्वार्थं नापि परमात्रार्थम्। संहतपरार्थत्वे चानवस्थाप्रसङ्गाद् असंहतपरार्थसिद्धिर् इति॥4.24॥

विशेषदर्शिन आत्मभावभावनानिवृत्तिः॥4.25॥

तद् एवं कैवल्यमूलबीजं युक्तिमयम् आत्मदर्शनम् उक्त्वा तदुपदेशाधिकृतं पुरुषम् अनधिकृतपुरुषान्तराद् व्यावृत्तम् आह --- विशेषदर्शिन आत्मभावभावनानिवृत्तिः। यस्यात्मभावे भावनास्ति तस्याष्टाङ्गयोगोपदेशाद् अनुतिष्ठतो युञ्जानस्य तत्परिपाकाच् चित्तसत्त्वपुरुषयोर् विशेषदर्शनाद् आत्मभावभावना निवर्तते। यस्यात्मभावभावनैव नास्ति नास्तिकस्य तस्योपदेशानधिकृतस्यापरिनिश्चितात्मतत्परलोकभावस्य नोपदेशो न विशेषदर्शनं नात्मभावभावनानिवृत्तिर् इति सूत्रार्थः। नन्व् आत्मभावभावनायाश् चित्तवर्तिन्याः कुतोऽवगम इत्य् अत आह --- यथा प्रावृषीति। प्राग्भवीयं तत्त्वदर्शनबीजम् अपवर्गभागीयं यत् कर्माष्टाङ्गयोगानुष्ठानं तद् एकदेशानुष्ठानं वा तदभिनिर्वर्तितम् अस्तीत्य् अनुमीयते। तस्य चात्मभावभावनावश्यम् एव स्वाभाविकी वस्त्वभ्यासं विनापि प्रवर्तते। अनधिकारिणम् आगमिनां वचनेन दर्शयति --- यस्याभावाद् इदम् इति। पूर्वपक्षो नास्ति कर्मफलं परलोकिनो ऽभावात् परलोकाभाव इति, तत्र रुचिर् अरुचिश् च निर्णये पञ्चविंशतितत्त्वविषये। आत्मभावभावना प्राग् व्याख्याता। विशेषदर्शिनः परामर्शम् आह --- चित्तस्यैवेति। तस्य (अस्य) विशेषदर्शनकुशलस्यात्मभावभावना निवर्तत इति॥4.25॥

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्॥4.26॥

अथ विशेषदर्शिनः कीदृशं चित्तम् इत्य् अत आह --- तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्। निगदव्याख्यातम्॥4.26॥

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः॥4.27॥

स्याद् एतद् विशेषदर्शनं चेद् विवेकनिष्ठं, न जातु चित्तं व्युत्थितं स्यात्। दृश्यते चास्य भिक्षाम् अटतो व्युत्थितम् इत्य् अत आह --- तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः। प्रत्ययेति। प्रतीयते येन स प्रत्ययश् चित्तसत्त्वं तस्माद् विवेकश् चितेः। तेन निम्नस्य जानामीति साक्षान्मोक्षो विविच्य दर्शितो न जानामीति मोहस् तन्मूलाव् अहंकारममकाराव् अहम् अस्मीति वा ममेति वा दर्शितौ। क्षीयमाणानि च तानि बीजानि चेति समासः। पूर्वसंस्कारेभ्यो व्युत्थानसंस्कारेभ्यः॥4.27॥

हानम् एषां क्लेशवद् उक्तम्॥4.28॥

स्याद् एतत् सत्य् अपि विवेकविज्ञाने व्युत्थानसंस्कारा यदि प्रत्ययान्तराणि प्रसुवते कस् तर्हि हानहेतुर् एतेषां यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्न् इत्य् अत आह --- हानम् एषां क्लेशवद् उक्तम्। अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः प्रत्ययान्तरं प्रसुवते न तु परिपक्वविवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुम् अर्हन्ति। यथा विवेकच्छिद्रसमुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते तत् कस्य हेतोस् तद् एते क्लेशा विवेकज्ञानवह्निदग्धबीजभावा इति। एवं व्युत्थानसंस्कारा अपीति। अथ व्युत्थानसंस्कारा विवेकज्ञानसंस्कारैर् निरोद्धव्या विवेकसंस्काराश् च निरोधसंस्कारैर् निरोधसंस्काराणां त्व् अबाह्यविषयत्वं दर्शितं निरोधोपायः प्रायश् चिन्तनीय इत्य् अत आह --- ज्ञानसंस्कारास् त्व् इति। परवैराग्यसंस्कारा इत्य् अर्थः॥4.28॥

प्रसंख्यानेऽप्य् अकुसीदस्य सर्वथा विवेकख्यातेर् धर्ममेघः समाधिः॥4.29॥

तद् एवं सूत्रकारो व्युत्थाननिरोधोपायं प्रसंख्यानम् उक्त्वा प्रसंख्याननिरोधोपायम् आह --- प्रसंख्यानेऽप्य् अकुसीदस्य सर्वथा विवेकख्यातेर् धर्ममेघः समाधिः। ततः प्रसंख्यानान् न किंचित् सर्वभावाधिष्ठातृत्वादि प्रार्थयते। प्रत्युत तत्रापि क्लिश्नाति परिणामित्वदोषदर्शनेन विरक्तः सर्वथा विवेकख्यातिर् एव भवति। एतद् एव विवृणोति --- तत्रापीति। यदा व्युत्थानप्रत्यया भवेयुस् तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिर् यतस् तस्य न प्रत्ययान्तराणि भवन्ति ततः सर्वथा विवेकख्यातिर् इति। तदास्य धर्ममेघः समाधिर् भवति। एतद् उक्तं भवति --- प्रसंख्याने विरक्तस्

तन्निरोधम् इच्छन् धर्ममेघं समाधिम् उपासीत। तदुपासने च सर्वथा विवेकख्यातिर् भवति। तथा च तं निरोद्धुं पारयतीति॥4.29॥

ततः क्लेशकर्मनिवृत्तिः॥4.30॥

तस्य च प्रयोजनम् आह --- ततः क्लेशकर्मनिवृत्तिः। कस्मात् पुनर् जीवन्न् एव विद्वान् विमुक्तो भवति। उत्तरं --- यस्माद् इति। क्लेशकर्मवासनेद्धः किल कर्माशयो जात्यादिनिदानम्। न चासति निदाने निदानी भवितुम् अर्हति। यथाहात्र भगवान् अक्षपादः --- "वीतरागजन्मादर्शनात्" [गौतमीयन्यायसूत्रम् 3.1.25] इति॥4.30॥

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज् ज्ञेयम् अल्पम्॥4.31॥

अथैवं धर्ममेघे सति कीदृशं चित्तम् इत्य् अत आह --- तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज् ज्ञेयम् अल्पम्। आव्रियते चित्तसत्त्वम् एभिर् इत्य् आवरणानि मलाः क्लेशकर्माणि सर्वे च त आवरणमलाश् चेति सर्वावरणमलास् तेभ्योऽपेतस्य चित्तसत्त्वस्य ज्ञानस्य ज्ञायतेऽनेनेत्य् अनया व्युत्पत्त्यानन्त्याद् अपरिमेयत्वाज् ज्ञेयम् अल्पम्। यथा हि शरदि घनपटलमुक्तस्य चण्डार्चिषः परितः प्रद्योतमानस्य प्रकाशानन्त्यात् प्रकाश्या घटादयोऽल्पाः प्रकाशन्ते, एवम् अपगतरजस्तमसश् चित्तसत्त्वस्य प्रकाशानन्त्याद् अल्पं प्रकाश्यम् इति। तद् एतद् आह --- सर्वैर् इति। एतद् एव व्यतिरेकमुखेन (व्यतिरेकमुखेण) स्फोरयति --- आवरकेण तमसाभिभूतम् इति। क्रियाशीलेन रजसा प्रवर्तितम् अत एवोद्घाटितं प्रदेशाद् अपनीतं तम इत्य् अर्थः। अत एव सर्वान् धर्माञ् ज्ञेयान् मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्य् उच्यते। नन्व् अयम् अस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रशमहेतुः। अथ सत्य् अप्य् अस्मिन् कस्मान् न जायते पुनर् जन्तुर् इत्य् अत आह --- यत्रेदम् उक्तम् इति। कारणसमुच्छेदाद् अपि चेत् कार्यं क्रियते हन्त भो मणिवेधादयो ऽन्धादिभ्यो भवेयुः प्रत्यक्षाः। तथा चानुपपन्नार्थतायाम् आभाणको लौकिक उपपन्नार्थः स्यात् --- अविध्यद् अन्धो मणिम् इति। आवयद् ग्रथितवान्। प्रत्यमुञ्चत् पिनद्धवान् अभ्यपूजयत् स्तुतवान् इति॥4.31॥

ततः कृतार्थानां परिणामक्रमसमाप्तिर् गुणानाम्॥4.32॥

ननु धर्ममेघस्य परा काष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातम् अपहन्तु व्युत्थानसमाधिसंस्कारान् सक्लेशकर्माशयान् गुणास् तु स्वत एव विकारकरणशीलाः कस्मात् तादृशम् अपि पुरुषं प्रति देहेन्द्रियादीन् नारभन्त इत्य् अत आह --- ततः कृतार्थानां परिणामक्रमसमाप्तिर् गुणानाम्। शीलम् इदं गुणानां यद् अमी यं प्रति कृतार्थास् तं प्रति न प्रवर्तन्त इति भावः॥4.32॥

क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः॥4.33॥

अत्रान्तरे परिणामक्रमं पृच्छति --- अथ कोऽयम् इति। क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः। परिणामक्रमः क्षणप्रतियोगी क्षणः प्रतिसंबन्धी यस्य स तथोक्तः। क्षणप्रचयाश्रय इत्य् अर्थः। न जातु क्रमः क्रमवन्तम् अन्तरेण शक्यो निरूपयितुम्। न चैकस्यैव क्षणस्य क्रमः। तस्मात् क्षणप्रचयाश्रयः परिशिष्यते। तद् इदम् आह --- क्षणानन्तर्येति। परिणामक्रमे प्रमाणम् आह --- परिणामस्येति। नवस्य हि वस्त्रस्य प्रयत्नसंरक्षितस्यापि चिरेण पुराणता दृश्यते। सोऽयं परिणामस्यापरान्तः पर्यवसानं, तेन हि परिणामस्य क्रमः। ततः प्राग् अपि पुराणतायाः सूक्ष्मसूक्ष्मतरसूक्ष्मतमस्थूलस्थूलतरस्थूलतमत्वादीनां पौर्वापर्यम् अनुमीयते। एतद् एव व्यतिरेकमुखेन (व्यतिरेकमुखेण) दर्शयति --- न हीति। अननुभूतोऽप्राप्तः क्रमक्षणो यया सा तथोक्ता। नन्व् एष क्रमः प्रधानस्य न संभवति तस्य नित्यत्वाद् इत्य् अत आह --- नित्येषु चेति। बहुवचनेन सर्वनित्यव्यापितां क्रमस्य प्रतिजानीते। तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्यव्यापितां क्रमस्योपपादयति --- द्वयीति। ननु कूटस्थं स्वभावाद् अप्रच्युतम् अस्तु नित्यं परिणामि सदैव स्वरूपाच् च्यवमानं कथं नित्यम् इत्य् अत आह --- यस्मिन्न् इति। धर्मलक्षणावस्थानाम् उदयव्ययधर्मत्वं धर्मिणस् तु तत्त्वाद् अविघात एवेति। अथ किं परिणामापरान्तनिर्ग्राह्यता सर्वत्र क्रमस्य नेत्य् आह --- तत्र गुणधर्मेषु बुद्ध्यादिष्व् इति। यतो लब्धपर्यवसानो धर्माणां विनाशात् प्रधानस्य तु परिणामक्रमो न लब्धपर्यवसानः। ननु प्रधानस्य धर्मरूपेण परिणामाद् अस्तु परिणामक्रमः। पुरुषस्य त्व् अपरिणामिनः कुतः परिणामक्रम इत्य् अत आह --- कूटस्थेति। तत्र बद्धानां चित्ताव्यतिरेकाभिमानात् तत्परिणामेन परिणामाध्यासः। मुक्तानां चास्तिक्रियाम् उपादायावास्तवोऽपि परिणामो मोहकल्पितः शब्दस्य पुरःसरतया तत्पृष्ठो विकल्पो ऽस्तिक्रियाम् उपादत्त इति। गुणेष्व् अलब्धपर्यवसानः परिणामक्रम इत्य् उक्तम्। तद् असहमानः पृच्छति --- अथेति। स्थित्येति महाप्रलयावस्थायाम्। गत्येति सृष्टौ। एतद् उक्तं भवति --- यद्य् आनन्त्यान् न परिणामसमाप्तिः संसारस्य हन्त भोः कथं महाप्रलयसमये सर्वेषाम् आत्मनां सहसा समुच्छिद्येत कथं च सृष्ट्यादौ सहसोत्पद्येत संसारः। तस्माद् एकैकस्यात्मनो मुक्तिक्रमेण सर्वेषां विमोक्षाद् उच्छेदः सर्वेषां संसारस्य क्रमेणेति प्रधानपरिणामक्रमपरिसमाप्तिः। एवं च प्रधानस्याप्य् अनित्यत्वप्रसङ्गः। न चापूर्वसत्त्वप्रादुर्भाव इष्यते येनानन्त्यं स्यात्। तथा सत्य् अनादित्वव्याहतेः सकलशास्त्रार्थभङ्गप्रसङ्ग इति भावः। उत्तरम् आह --- अवचनीयम् अनुत्तरार्हम् एतत्। एकान्तत एतस्यावचनीयतां दर्शयितुम् एकान्तवचनीयं प्रश्नं दर्शयति अस्ति प्रश्न इति। सर्वो जातो मरिष्यतीति प्रश्नोत्तरम् --- ओं भो इति। सत्यं भो इत्य् अर्थः। अविभज्य वचनीयम् उक्त्वा प्रविभज्य वचनीयं प्रश्नम् आह --- अथ सर्व इति। विभज्य वचनीयताम् आह --- विभज्येति। विभज्य वचनीयम् एव प्रश्नान्तरं विस्पष्टार्थम् आह --- तथा मनुष्येति। अयं त्व् अवचनीय एकान्ततः। न हि सामान्येन कुशलाकुशलपुरुषसंसारस्यान्तवत्त्वम् अनन्तवत्त्वं वा शक्यम् एकान्ततो वक्तुम्। यथा प्राणभृन्मात्रस्य श्रेयस्त्वम् अश्रेयस्त्वं वा नैकान्ततः

शक्यम् अवधारयितुम्। यथा जातमात्रस्य मरणम् एकान्ततः। विभज्य पुनः शक्यावधारणम् इत्य् आह --- कुशलस्येति। अयम् अभिसंधिः --- क्रमेण मोक्षे सर्वेषां मोक्षात् संसारोच्छेद इत्य् अनुमानं, तच् चागमसिद्धमोक्षाश्रयं, तथा चाभ्युपगतमोक्षप्रतिपादकागमप्रमाणब्हावः कथं तम् एवागमं प्रधानविकारनित्यतायाम् अप्रमाणीकुर्यात्। तस्माद् आगमबाधितविषयम् एतद् अनुमानं न प्रमाणम्। श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु सर्गप्रतिसर्गपरम्पराया अनादित्वम् अनन्तत्वं चेति। अपि च सर्वेषाम् एवात्मनां संसारस्य न तावद् युगपदुच्छेदः संभवी। न हि पण्डितरूपाणाम् अप्य् अनेकजन्मपरम्पराभ्यासपरिश्रमसाध्या विवेकख्यातिप्रतिष्ठा। किं पुनः प्राणभृन्मात्रस्य स्थावरजङ्गमादेर् एकदाकस्माद् भवितुम् अर्हति। न च कारणायौगपद्ये कार्ययौगपद्यं युज्यते। क्रमेण तु विवेकख्याताव् असंख्येयानां क्रमेण मुक्तौ न संसारोच्छेदोऽनन्तत्वाज् जन्तूनाम् असंख्येयत्वाद् इति सर्वम् अवदातम्॥4.33॥

पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिर् इति॥4.34॥

(इति श्रीपतञ्जलिविरचितयोगसूत्रेषु चतुर्थः कैवल्यपादः॥4॥)

कैवल्यरूपावधारणपरस्य सूत्रस्यावान्तरसंगतिम् आह --- गुणाधिकारेति। पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिर् इति। कृतकरणीयतया पुरुषार्थशून्यानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयस् तेषां कार्यकारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते मनो ऽस्मितायाम् अस्मिता लिङ्गे लिङ्गम् अलिङ्ग इति। योऽयं गुणानां कार्यकारणात्मकानां प्रतिसर्गस् तत् कैवल्यम्। यं कंचित् पुरुषं प्रति प्रधानस्य मोक्षः स्वरूपप्रतिष्ठा वा पुरुषस्य मोक्ष इत्य् आह --- स्वरूपेति। अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिः। न चासौ मोक्ष इत्य् अत आह --- पुनर् इति। सौत्र इतिशब्दः शास्त्रपरिसमाप्तौ॥4.34॥

मुक्त्यर्हचित्तं परलोकमेयज्ञसिद्धये धर्मघनः समाधिः। द्वयी च मुक्तिः प्रतिपादितास्मिन् पादे प्रसङ्गाद् अपि चान्यद् उक्तम्॥1॥ निदानं तापानाम् उदितम् अथ तापाश् च कथिताः सहाङ्गैर् अष्टाभिर् विहितम् इह योगद्वयम् अपि॥ कृतो मुक्तेर् अध्वा गुणपुरुषभेदः स्फुटतरो विविक्तं कैवल्यं परिगलितताषा चितिर् असौ॥2॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां कैवल्यपादश् चतुर्थः॥4॥

**समाप्तम् इदं पातञ्जलयोगदर्शनं सटीकभाष्ययुतम्॥**